स्वतीवीरपत्नीधियंधात् ॥ आभिरर्चिच्छद्रंशरणंसजोषादुराधर्षंगृणतेशर्मयंसत् ॥ कद्धिष्ण्यासुवृधसा
नोअग्नेकद्वातायप्रतवसेशुभंये ॥ परिज्मनेनासत्यायक्षेब्रवःकदग्नेरुद्रायनृघ्ने ॥ कथामहेरुद्रियायब्र
वामकद्रायोचिकितुषेभगाय ॥ आपओषधीरुतनोवंतुद्यौर्वनागिरयोवृक्षकेशाः ॥ सप्तमेसप्तशाकि
नएकमेकाशताददुः ॥ यमुनायामधिश्रुतमुद्राधोगव्यंमृजेनिराधोमृजे ॥ रथीतमंकपर्दिन
मीशानंराधसोमहः ॥ रायःसखायमीमहे ॥ रुद्रस्ययेमीळ्हुषःसंतिपुत्रायांश्चोनुदाधृविर्भरध्यै ॥ वि
देहिमातामहोमहीषासेत्पृश्निःसुभ्वे३गर्भमाधात् ॥ अगस्त्यःखनमानःखनित्रैःप्रजामपत्यंबलमिच्छ
मानः ॥ उभौवर्णावृषिरुग्रःपुपोषसत्यादेवेष्वाशिषोजगाम ॥ यदद्यकच्चवृत्रहन्नुदगाअभिसूर्य ॥
सर्वंतदिंद्रतेवशे ॥ १ ॥ नतंराजानावदितेकुतश्चननांहोअश्नोतिदुरितंनकिर्भयं ॥ यमश्विनासुह
वारुद्रवर्तनीपुरोरथंकृणुथःपत्न्यासह ॥ रोहिच्छ्यावासुमदंशुर्ललामीर्द्युक्षारायऋज्राश्वस्य ॥ वृष
ण्वंतंबिभ्रतीधूर्षुरथंमंद्राचिकेतनाहुषीषुविक्षु ॥ यूपव्रस्काउतयेयूपवाहाश्चषालंयेअश्वयूपायतक्ष

ति ॥ येचार्वतेपचनंसंभरंत्युतोतेषामभिगूर्तिर्नइन्वतु ॥ सदापृणोयजतोविद्विषोवधीद्बाहुवृक्तःश्रुत
वित्तर्योवःसचा ॥ उभासवराप्रत्येतिभातिचयदीगणंभजतेसुप्रयावभिः ॥ एभिर्द्युभिःसुमनाएभिरिं
दुभिर्निरुंधानोअमतिंगोभिरश्विना ॥ इंद्रेणदस्युंदरयंतइंदुभिर्युतद्वेषसःसमिषारभेमहि ॥ स्वर्भानो
रधयदिंद्रमायाअवोदिवोवर्तमानाअवाहन् ॥ गूळ्हंसूर्यंतमसापव्रतेनतुरीयेणब्रह्मणाविंददत्रिः ॥२॥
दूराच्चिदावसतोअस्यकर्णाघोषादिंद्रस्यतन्यतिब्रुवाणः ॥ एयमेनंदेवहूतिर्ववृत्यान्मद्र्यगिंद्रमिय
मृच्यमाना ॥ तंवोधियापरमयापुराजामजरमिंद्रमभ्यनूष्यर्कैः ॥ ब्रह्माचगिरोदधिरेसमस्मिन्महां
श्चस्तोमोअधिवर्धदिंद्रे ॥ इंद्रमृळमर्त्यंजीवातुमिच्छचोदयधियमयसोनधारां ॥ यत्किंचाहंत्वायु
रिदंवदामितज्जुषस्वकृधिमादेववंतं ॥ एवाजज्ञानंसहसेअसामिवावृधानंराधसेचश्रुताय ॥ महामु
ग्रमवसेविप्रनूनमाविवासेमवृत्रतूर्येषु ॥ समिद्धमग्निंसमिधागिरागृणेशुचिंपावकंपुरोअध्वरेध्रुवं ॥ वि
प्रंहोतारंपुरुवारमद्रुहंकविंसुम्नैरीमहेजातवेदसं ॥ यस्मिन्वयंदधिमाशंसमिंद्रेयःशिश्रायमघवाकामम

स्मे ॥ आराच्चित्सन्भयतामस्यशत्रुर्न्यस्मैद्युम्नाजन्यानिमंता ॥ तेअज्येष्ठाअकनिष्ठासउद्भिदोम
ध्यमासोमहसाविवावृधुः ॥ सुजातासोजनुषापृश्निमातरोदिवोमर्याआनोअच्छाजिगातन ॥ ६ ॥
यदुत्तमेमरुतोमध्यमेवायद्वावमेसुभगासोदिविष्ठ ॥ अतोनोरुद्राउतवान्व१स्याग्नेवित्ताद्धविषोयद्य
जाम ॥ यदिन्न्विंद्रपृथिवीदशभुजिरहानिविश्वाततनंतकृष्टयः ॥ अत्राहतेमघवन्विश्रुतंसहोद्याम
नुशवसाबर्हणाभुवत् ॥ त्वमस्यपारेरजसोव्योमनःस्वभूत्योजाअवसेधृषन्मनः ॥ चकृषेभूमिंप्र
तिमानमोजसोपःस्वःपरिभूरेष्यादिवं ॥ सहिद्वरोद्वरिषुवव्रऊधनिचंद्रबुध्नोमदवृद्धोमनीषिभिः ॥
इंद्रंतमह्वेस्वपस्ययाधियामंहिष्ठरातिंसहिपप्रिरंधसः ॥ एवानःसोमपरिषिच्यमानोवयोदधच्चित्रत
मंपवस्व ॥ अद्वेषेद्यावापृथिवीहुवेमदेवाधत्तरयिमस्मेसुवीरं ॥ ४ ॥ इंद्रापर्वताबृहतारथेनवामी
रिषआवहतंसुवीराः ॥ वीतंहव्यान्यध्वरेषुदेवावर्धेथांगीर्भिरिळयामदंता ॥ स्थिरौगावौभवतांवी
ळुरक्षोमेषाविवर्हिमायुगंविशारि ॥ इंद्रःपातल्येददतांशरीतोरारिष्टनेमेअभिनःसचस्व ॥ वनस्पतेवी

इंद्रगोहिभूयाअस्मत्संरवाप्रतरणःसुवीरः ॥ गोभिःसंनद्धोअसिवीळयंस्वास्थातातेंजयतुजेत्वांनि॥५॥
अयमस्मान्वनस्पतिर्माचहामाचरीरिषत् ॥ स्वस्त्यागृहेभ्यआवसाआविमोचनात् ॥ इंद्रोति
भिर्बहुलाभिर्नोअद्ययाच्छ्रेष्ठाभिर्मघवन्छूरजिन्व ॥ योनोद्वेष्ट्यधरःसस्पदीष्टयमुद्विष्मस्तमुंप्राणो
जहातु ॥ प्रवोयव्हंपुरूणांविशांदेवयतीनां ॥ अग्निंसूक्तेभिर्वचोभिरीमहेयंसीमिदन्यईळते ॥
न्यूँषुवाचंप्रमहेभरामहेगिरइंद्रायसदनेविवस्वतः ॥ नूचिद्धिरत्नंससतामिवाविदन्नदुष्टुतिर्द्रविणोदे
षुशस्यते ॥ दुरोअश्वस्यदुरइंद्रगोरसिदुरोयवस्यवसुनइनस्पतिः ॥ शिक्षानरःप्रदिवोअकामकर्शनः
सखासखिभ्यस्तमिदंगृणीमसि ॥ ६ ॥ आयाहिशश्वदुशतायथाथेंद्रमहामनसासोमपेयं ॥ उपब्र
ह्माणिशृणवइमानोथातेयज्ञस्तन्वेवयोधात् ॥ यदिंद्रदिविपार्येयदृधग्यद्वास्वेसदनेयत्रवासिअतो
नोयज्ञमवसेनियुत्वान्त्सजोषाःपाहिगिर्वणोमरुद्भिः ॥ यदीसुतेभिरिंदुभिःसोमेभिःप्रतिभूषथ ॥ वे
दाविश्वस्यमेधिरोधृषत्तंतमिदेषते॥यावोनस्तृभिंश्वितयंतखादिनोव्यं१श्रियानद्युतयंतवृष्टयः॥ रुद्रो

यद्वोमरुतोरुक्मवक्षसोत्वषाजंनिपृश्न्याःशुक्रऊधनि ॥ चित्रंतद्वोमरुतोयामचेकितेपृश्न्यायदूधरप्याप
योदुहुः ॥ यद्वांनिदेनवमानस्यरुद्रियास्त्रितंजरायजुरतामदाभ्याः ॥ ७ ॥ अग्निरस्मिजन्मनाजा
तवेदाघृतंमेचक्षुरमृतंमआसन् ॥ अर्कस्त्रिधातूरजसोविमानोजस्रोघर्मोहविरस्मिनाम ॥ सुगोहि
वोअर्यमन्मित्रपंथाअनृक्षरोवरुणसाधुरस्ति ॥ तेनादित्याअधिवोचतानोयच्छतानोदुष्परिहंतुश
र्म ॥ पिपर्तुनोअदितीराजपुत्रातिद्वेषांस्यर्यमासुगेभिः ॥ बृहन्मित्रस्यवरुणस्यशर्मोपस्यामपुरुवीराअ
रिष्टाः ॥ तिस्रोभूमीर्धारयन्त्रीरुतद्यून्त्रीणिव्रताविदथेअंतरेषां ॥ ऋतेनादित्यामहिवोमहित्वंतदर्यमन्व
रुणमित्रचारु ॥ त्रीरोचनादिव्याधारयंतहिरण्ययाःशुचयोधारपूताः ॥ अस्वप्नजोअनिमिषा
अदब्धाउरुशंसाऋजवेमर्त्याय ॥ त्वंविश्वेषांवरुणासिराजायेचदेवाअसुरयेचमर्ताः ॥ शतंनो
रास्वशरदोविचक्षेश्यामायूंषिसुधितानिपूर्वा ॥ ८ ॥ प्रातर्युजाविबोधयाश्विनावेहगच्छतां ॥
अस्यसोमस्यपीतये ॥ आराच्छत्रुमपबाधस्वदूरमुग्रोयःशंबःपुरुहूततेन ॥ अस्मेधेहियवमद्गोम

दिंद्रकृधीधियंजरित्रेवाजरत्नां॥विश्वेदेवाःशास्तनमायथेहहोतावृतोमनवैयन्निषद्य॥ प्रमेब्रूतभागधे
यंयथावोयेनपथाहव्यमावोवहानि॥ पंचजनाममहोत्रंजुषंतांगोजाताउतयेयज्ञियासः॥ पृथिवीनःपा
र्थिवात्पात्वंहसोंतरिक्षंदिव्यात्पात्वस्मान्॥ प्रीणीताश्वान्हितंजयाथस्वस्तिवाहंरथमित्कृणुध्वं॥द्रोणा
हावमवतमश्मचक्रमंसत्रकोशंसिंचतानृपाणं॥आवोधियंयज्ञियांवर्तऊतयेदेवादेवींयजतांयज्ञियामि
ह॥सानोदुहीयद्यवसेवगत्वीसहस्रधारापयसामहीगौः॥ ९ ॥ मुनयोवातरशनाःपिशंगावसतेमला ॥
वातस्यानुध्राजिंयंतियद्देवासोअविक्षत॥ सवितायंत्रैःपृथिवीमरम्णादस्कंभनेसविताद्यामदृंहत् ॥
अश्वमिवाधुक्षद्धुनिमंतरिक्षमतूर्तेबद्धंसवितासमुद्रं ॥ आत्मादेवानांभुवनस्यगर्भोयथावशंचरतिदे
वएषः॥ घोषाइदस्यशृण्विरेनरूपंतस्मैवातायहविषाविधेम॥ चतुर्दशान्येमहिमानोअस्यतंधीरावा
चाप्रणयंतिसप्त॥ आमानंतीर्थकइहप्रवोचद्येनपथाप्रपिबंतेसुतस्य॥ तामंदसानामनुपोदुरोणआ
धत्तरयिंसहवीरंवचस्यवे॥ कृतंतीर्थंसुप्रपाणंशुभस्पतीस्थाणुंपथेष्ठामपदुर्मतिंहतं॥ अधायिधीति

रसंस्तृग्रमंशांस्तीर्थेनदस्ममुपयंत्यूमाः ॥ अभ्यानश्मस्तुविनस्यंशूषंनवेदसोअमृतानामभूम ॥ १० ॥
उतनंएनापंवयापंवस्वाधिश्रुतेश्रवाय्यंस्यतीर्थे ॥ षष्टिंसहस्रानैगुतोवसूंनिवृक्षंनपक्वंधूंनवद्रणाय ॥
आदित्याअवहिरव्यताधिकूलादिवस्पशः ॥ सुतीर्थमर्वतोयथानुनोनेषथासुगमनेहसोवऊतयःसुऊत
योवऊतयः ॥ यज्ञोहिष्मेंद्रंकश्चिदृंधन्जुहुराणश्चिन्मनंसापरियन् ॥ तीर्थेनाच्छातातृषाणमोकोदीर्घो
नसिध्रमाकृणोत्यध्वा ॥ प्रतिप्रयाहींद्रमीळ्हुषोनृन्महःपार्थिवेसदनेयतस्व ॥ अधयदेषांपृथुबुध्नासएत
ास्तीर्थेनार्यःपौंस्यानितस्थुः ॥ ११ ॥ योनोअग्नेअररिवाँअघायुररातीवामर्चयतिद्वयेन ॥ मंत्रो
गुरुःपुनरस्तुसोअस्माअनुमृक्षीष्टतन्वंदुरुक्तैः ॥ वयमुत्वागृहपतेजनानामग्नेअकर्मसमिधाबृहंतं ॥ अ
स्थूरिणोगार्हपत्यानिसंतुतिग्मेननस्तेजसासंशिशाधि ॥ अग्नेमृळमहाँअसियईमादेवयुंजनं ॥ इयेथ
बर्हिरासदं ॥ युवंहगर्भंजगतीषुधत्थोयुवंविश्वेषुभुवनेष्वंतः ॥ युवमग्निंचवृषणावपश्चवनस्पतींरशिव
नावैरयेथां ॥ युवंहस्थोभिषजाभेषजेभिरथोहस्थोरथ्याराथ्येभिः ॥ अथोहक्षत्रमाधिधत्थउग्रायो

वांहविष्मान्मनसाददाश ॥ १२ ॥ नयस्यद्यावापृथिवीअनुव्यचोनसिंधवोरजसोअंतमानशुः ॥ नो
तस्ववृष्टिंमदेअस्ययुध्यतएकोअन्यच्चकृषेविश्वमानुषक् ॥ श्रीणामुदारोधरुणोरयीणांमनीषाणांप्रा
र्पणःसोमगोपाः ॥ वसुःसूनुःसहसोअप्सुराजाविभात्यग्रउषसामिधानः ॥ संमानमुत्यंपुरुहूतमुक्थ्यं
१रथंत्रिचक्रंसवनागनिग्मतं ॥ परिज्मानंविदथ्यंसुवृक्तिभिर्वयंव्युष्टाउषसोहवामहे ॥ मांधुरिंद्रंनाम
देवतादिवश्चग्मश्चापांचजंतवः ॥ अहंहरीवृषणाविव्रताराघूअहंवज्रंशवसेधृष्णवाददे ॥ १३ ॥ मह
त्तदुल्बंस्थविरंतदासीद्येनाविष्टितःप्रविवेशिथापः ॥ विश्वाअपश्यद्बहुधातेअग्नेजातवेदस्तन्वोदेवए
कः ॥ तासुतेकीर्तिंमघवन्महित्वायत्त्वाभीतेरोदसीअह्वयेतां ॥ प्रावोदेवाँआतिरोदासमोजःप्रजायैत्व
स्यैयदशिक्षइंद्र ॥ देवानांपत्नीरुशतीरवंतुनःप्रावंतुनस्तुजयेवाजसातये ॥ याःपार्थिवासोयाअपाम
पिव्रतेतानोदेवीःसुहवाःशर्मयच्छत ॥ येचपूर्वऋषयोयेचनूत्नाइंद्रब्रह्माणिजनयंतविप्राः ॥ अस्मेते
संतुसख्याशिवानियूयं० ॥ यदिमेरारणःसुतउक्थेवादधसेचनः ॥ आरादुपस्वधागहि ॥ चित्तिम

चित्तिंचिनवद्विविद्वान्पृष्ठेवंवीतारंजिनाचमर्तानं ॥ रायेचंनःस्वपत्यायंदेवदितिंचरास्वादितिमुरु
ष्यं ॥ नमइदुग्रंनमआविवासेनमोदाधारपृथिवीमुतद्यां ॥ नमोदेवेभ्योनमईशएषांकृतंचिदेनोनमसा
विवासे ॥ १४ ॥ द्रुपदादिवेन्मुमुचानःस्विन्नःस्नात्वीमलादिव ॥ पूतंपवित्रेणेवाज्यमापःशुंधंतुमैन
सः ॥ ममनामंप्रथमंजातवेदःपितामाताचंदधतुर्यदग्रे ॥ तत्त्वंबिभृहिपुनरामैतोस्त्ववाहंनामंबिभ
राण्यग्ने ॥ यंवेसूर्यंस्वर्भानुस्तमसाविध्यदासुरः ॥ अत्रंयस्तमन्वविदन्नत्यन्येअशंक्नुवन् ॥१५॥
॥ अथ श्रीसूक्तशेषः ॥ ॥ पद्मानुनेपद्मिनिपद्मपत्रेपद्मप्रियेपद्मदलायताक्षि ॥ विश्वप्रियेविश्वमनो
नुकूलेत्वत्पादपद्मंमयिसंनिधत्स्व ॥ पद्माननेपद्मऊरुपद्माक्षीपद्मसंभवे ॥ तन्मेभजसिपद्माक्षियेन
सौख्यंलभाम्यहं ॥ अश्वदायैगोदायैधनदायैमहाधने ॥ धनंमेजुषतांदेवीसर्वकामांश्चदेहिमे ॥ पुत्र
पौत्रधनंधान्यंहस्त्यश्वादिगवेरथं ॥ प्रजानांभवसिमाताआयुष्मंतंकरोतुमे ॥ धनमग्निर्धनंवायुर्धनंसू
र्योधनंवसुः ॥ धनमिंद्रोबृहस्पतिर्वरुणंधनमश्नुते ॥ वैनतेयसोमंपिबसोमंपिबतुवृत्रहा ॥ सोमंधनं

स्यसोमिनोमर्त्यंददातुसोमिनः ॥ नक्रोधोनचमात्सर्यंनलोभोनाशुभामतिः ॥ भवंतिकृतपुण्यानां
भक्तानांश्रीसूक्तजपकारिणां॥सरसिजनिलयेसरोजहस्तेधवलतरांशुकगंधमाल्यशोभे॥भगवतिहरिव
ल्लभेमनोज्ञेत्रिभुवनभूतिकरिप्रसीदमर्ह्यं ॥ विष्णुपत्नींक्षमांदेवींमाधवींमाधवप्रियां ॥ विष्णोःप्रि
यसखींदेवींनमाम्यच्युतवल्लभां ॥ श्रीर्वर्चस्वमायुष्यमारोग्यमाविधात्पवमानंमहीयते ॥ धा
न्यंधनंपशुंबहुपुत्रलाभंशतसंवत्सरंदीर्घमायुः ॥ १६ ॥ मनोजवाअयमानआयसीमंतरत्पुरं ॥
दिवंसुपर्णोगत्वायसोमंवज्रिणआभरत् ॥ अधिद्वयोरदधाउक्थ्यं१वचोयतस्रुचामिथुनायासपर्यतः ॥
असंयत्तोव्रतेतेक्षेतिपुष्यतिभद्राशक्तियंजमानायसुन्वते॥तासुजिह्वाउपह्वयेहोताराद्वैव्यांकवी ॥ यज्ञं
नोयक्षतामिमं॥इळासरस्वतीमहीतिस्रोदेवीर्मयोभुवः॥बर्हिःसीदंत्वस्रिधः॥१७॥ (१०—त्रिःसप्तसप्ता
नद्योमहीरपोवनस्पतीन्पर्वतांअग्निमूतये॥कृशानुमस्तॄन्तिष्यंसधस्थआरुद्रंरुद्रेषुरुद्रियंहवामहे॥१॥)
॥ अथ श्राद्धमंत्राः ॥ पवित्रंतेविततंब्रह्मणस्पतेप्रभुर्गात्राणिपर्येतिविश्वतः ॥ अतंसतनूर्नतदामो

अंश्रुतेंशूतासइद्दहंतुस्तत्समांशत ॥ तपोंष्पवित्रंवितंतंदिवस्पदेशोचंतो।अस्यतंतंवोंऽयंस्थिरन् ॥
अवैंत्यस्यपवीतारंमाशवोंदिवस्पृष्ठमधिंतिष्ठंतिचेतसा ॥ पवित्रंवंतःपरिवाचंमासतेपितैपांप्रत्नोअ
भिरंक्षतिव्रतं ॥ महःसंमुद्रंवरुणस्तिरोदंधेधीराइच्छेकुर्धरुणेष्वारभं ॥ शरासःकुशांरासोदर्भासःसैर्या
उत ॥ मौंजाअदृष्टांबैरिणाःसर्वैसाकंन्यंलिप्सत ॥ माकांकंबीरमुद्वृहोवनस्पतिमशंस्तीर्विहिनी
नेशः ॥ मोतसूरोअहएवाचनग्रीवाआदधंतेवेः ॥ यवोसिधान्यराजस्त्वंवारुणोमधुसंयुतः ॥ निर्णोदः
सर्वपापानांपवित्रमृषिभिःस्मृतं ॥ तिलोसिसोमदेवत्योगोसवेदेवनिर्मितः ॥ प्रत्नवद्भिःप्रत्तःस्वधया
पितॄनिमाँल्लोकान्प्रीणयाहिनःस्वधानमः ॥ आयंतुनःपितरःसोम्यासोग्निष्वात्ताःपथिभिर्देवयानैः ॥
अस्मिन्यज्ञेस्वधयामदंत्वधिंब्रुवंतुतेवंत्वस्मान् ॥ धूरसिधूर्वधूर्वंतंधूर्वंतंयोस्मान्धूर्वतितंधूर्वयंवयंधूर्वा
मः ॥ उद्दीप्य० ॥ प्रत्यग्नेहरंसाहरःशृणीहिविश्वतःप्रति ॥ यातुधानस्यरक्षसोबलंविरुजवीर्यं ॥ अ
पहताअसुरारक्षांसिपिशाचा ॥ येक्षयंतिपृथिवीमनु ॥ अन्यत्रेतोगच्छंतुयत्रैतेषांगतंमनः ॥ विश्वे

देवासआगतशृणुतामइमंहवं ॥एदंबर्हिर्निषदित॥विश्वेदेवाःशृणुतेमंहवंमेयेअंतरिक्षेयउपद्यविष्ठ ॥
येअग्निजिह्वाउतवायजत्राआसद्यास्मिन्बर्हिषिमादयध्वं ॥ यादिव्याआपःपृथिवीसंबभूवुर्याअंतरि
क्ष्याउतपार्थिवीर्याः॥हिरण्यवर्णायज्ञियास्तानआपःशंस्योनाभवंतु ॥२॥उशंतस्त्वानिधीमह्युशंतःस
मिधीमहि॥उशन्नुशतआवहपितॄन्हविषेअत्तवे॥आमासुपक्वमैरयआसूर्यंरोहयोदिवि ॥घर्मंनसामन्त
पतासुवृक्तिभिर्जुष्टंगिर्वणसेबृहत् ॥ सोमोधेनुंसोमोअर्वंतमाशुंसोमोवीरंकर्मण्यंददाति ॥ सादन्यंविद
थ्यंसभेयंपितृश्रवणंयोददाशदस्मै ॥ ३ ॥ ॥ अन्नस्तुतिसूक्तं ॥ उपह्वयेसु०क्र० ॥२॥ इंद्रदृत्येयं या
मकोशाअभूवन्यज्ञायशिक्षगृणतेसखिभ्यः ॥ दुर्मायवोदुरेवामर्त्यासोनिषंगिणोरिपवोहंत्वासः ॥
वाशीमंतऋष्टिमंतोमनीषिणःसुधन्वानइषुमंतोनिषंगिणः ॥ स्वश्वाःस्थसुरथाःपृश्निमातरःस्वायुधाम
रुतोयाथनाशुभं ॥ १ ॥ सइषुं० ॥ चतुष्कपर्दायुवतिःसुपेशाघृतप्रतीकावयुनानिवस्ते ॥ त
स्यांसुपर्णावृषणानिषेदतुर्यत्रदेवादधिरेभागधेयं ॥ एकःसुपर्णःससमुद्रमाविवेशसइदंविश्वंभुवनंवि

चंष्टे ॥ तंपाकेनमनसापश्यमंतितस्तंमातारेळ्हिसउरेळ्हिमातरं ॥ सुपर्णंविप्राःकवयोवचोभिरेकंसं
तंबहुधाकल्पयंति ॥ छंदांसिचदधतोअध्वरेषुग्रहान्त्सोमस्यमिमतेद्वादश ॥ २ ॥ पितुंनुस्तोषंमहो
धर्माणंतविषीं ॥ यस्यत्रितोव्योजसावृत्रंविपर्वमर्दयत् ॥ स्वादोपितोमधोपितोवयंत्वावृणमहे॥ अ
स्माकमविताभव ॥ उपनःपितवाचरःशिवःशिवाभिरूतिभिः ॥ मयोभुरद्विषेण्यःसखासुशेवोअद्व
याः ॥ तवत्येपितोरसारजांस्यनुविष्ठिताः ॥ दिविवाताइवश्रिताः ॥ तवत्येपितोददतस्तवस्वादिष्ठ
तेपितो ॥ प्रस्वाद्मानोरसानांतुविग्रीवाइवेरते ॥ ३ ॥ त्वेपितोमहानांदेवानांमनोहितं ॥ अकारि
चारुकेतुनातवाहिमवसावधीत् ॥ यददोपितोअजगन्विवस्वपर्वतानां॥अत्राचिन्नोमधोपितोरंभक्षाय
गम्याः ॥ यदपामोषधीनांपरिंशमारिशामहे ॥ वातापेपीवइद्भव ॥ यत्तेसोमगवाशिरोयवाशिरोभ
जामहे ॥ वाता० ॥ करंभओषधेभवपीवोवृक्कउदारथिः ॥ वाता० ॥ तंत्वावयंपितोवचोभिर्गावो
नहव्यासुषूदिम ॥ देवेभ्यस्त्वासधमादमस्मभ्यंत्वासधमादं ॥ कयान०क्र० ॥ १ ॥ कस्त्वास

त्योमदानांमंहिष्ठोमत्सदंधसः ॥ दृह्ळाचिदारुजेवसु ॥ अभीषुणःसखीनामविताजरितॄणां ॥
शतंभवास्यूतिभिः ॥ ४ ॥ नवाउदेवाःक्षुधमिद्वधंददुरुताशितमुपगच्छंतिमृत्यवः ॥ उतोरयिःपृ
णतोनोपदस्यत्युतापृणन्मर्डितारंनविंदते ॥ यआध्रायचकमानायपित्वोन्नवान्त्सन्रफितायोपज
ग्मुषे ॥ स्थिरंमनःकृणुतेसेवतेपुरोतोचित्समर्डितारंनविंदते ॥ सइद्भोजोयोगृहवेददात्यन्नकामायच
रतेकृशाय ॥ अरमस्मैभवतियामहूताउतापरीषुकृणुतेसखायं ॥ नससखायोनददातिसख्येसचा
भुवेसचमानायपित्वः ॥ अपास्मात्प्रेयान्नतदोकोअस्तिपृणंतमन्यमरणंचिदिच्छेत् ॥ पृणीयादि
न्नाधमानायतव्यान्द्राघीयांसमनुपश्येतपंथां ॥ ओहिवर्ततेरथ्येवचक्रान्यमन्यमुपतिष्ठंतरायः ॥१॥
मोघमन्नंविंदतेअप्रचेताःसत्यंब्रवीमिवधइत्सतस्य ॥ नार्यमणंपुष्यतिनोसखायंकेवलाघोभवति
केवलादी ॥ कृषन्नित्फालआशितंकृणोतियन्नध्वानमपवृंक्तेचरित्रैः ॥ वदन्ब्रह्मावदतोवनीया
न्पृणन्नापिरपृणंतमभिष्यात् ॥ एकपाद्भूयोद्विपदोविचक्रमेद्विपात्त्रिपादमभ्येतिपश्चात् ॥ चतु

ष्पादेतिद्विपदामभिस्वरेसंपश्यंन्पङ्क्तीरुपतिष्ठमानः ॥ समौचिद्धस्तौनसमंविविष्टःसंमातरौचिन्नसमं
दुहाते ॥ यमयोश्चिन्नसमावीर्याणिज्ञातीचित्संतौनसमंपृणीतः ॥ २ ॥ जगृभ्मातेदक्षिणमिंद्रहस्तं
वसूयवोवसुपतेवसूनां ॥ विद्माहित्वागोपतिंशूरगोनामस्मभ्यंचित्रंवृषणंरयिंदाः ॥ अक्षन्नमीमदंत
त्यवप्रियाअधूषत ॥ अस्तोषतस्वभानवोविप्रानविष्ठयामतीयोजान्विंद्रतेहरी ॥ नमोवःपितरऊर्जेनमोवः
पितरःशुष्मायनमोवःपितरोघोरायनमोवःपितरोजीवायनमोवःपितरोरसाय ॥ नमोवःपितरद्भेषेन
स्वधावःपितरोनमोवःपितरोनमएतायुष्माकंपितरइमाअस्माकंजीवावोजीवंतइहसंतःस्याम ॥ म
नोन्वाहुवामहेनाराशंसेनसोमेन ॥ पितृणांचमन्मभिः ॥ आतएतुमनःपुनःक्रत्वेदक्षायजीवसे॥ज्यो
क्चसूर्यंदृशे ॥ पुनर्नःपितरोमनोददातुदैव्योजनः ॥ जीवंव्रातंसचेमहि ॥ परेतनपितरःसोम्यासोगं
भीरेभिःपथिभिःपूर्विणेभिः ॥ दत्वायास्मभ्यंद्रविणेहभद्रंरयिंचनःसर्ववीरंनियच्छत ॥ यत्रतत्परमं
पदंविष्णोर्लोकेमहीयते॥देवैःसुकृतंकर्मभिस्तत्रमाममृतंकृधींद्रायेंदोपरिस्रव॥यत्रतत्परमाव्यंभूताना
२४

मधिपतिः ॥ भावभाविचयोगीश्वतत्रमामम् तंकृधींद्रायें० ॥यत्रगंगाचयमुनाचयत्रप्राचीसरस्वती ॥
यत्रसोमेश्वरोदेवस्तत्रमामम्० ॥१॥ वाजेवाजेवतवाजिनोनोधनेषुविप्राअमृताऋतज्ञाः ॥ अस्य
मध्वःपिबतमादयध्वंतृप्तायातपथिभिर्देवयानैः ॥ आमावाजस्यप्रसवोजगम्यादाद्यावापृथिवीविश्व
शंभू ॥ आमागंतांपितरामातराचामासोमोअमृतत्वायगम्यात् ॥ दातारोनोभिवर्धतांवेदाःसंततिरेव
नः ॥ श्रद्धाचनोमाव्यगमद्बहुदेयंचनोस्तु ॥ अन्नंचनोबहुभवेदतिथींश्चलभेमहि ॥ याचि
तारश्चनःसंतुमाचयाचिष्मकंचन ॥ १ ॥ दातारोवोभिवर्धतांवेदाःसंततिरेववः ॥ श्रद्धाचवोमा
व्यगमद्बहुदेयंचवोस्तु॥ अन्नंचवोबहुभवेदतिथींश्चलभध्वं॥ याचितारश्चवःसंतुमाचयाचिष्टकंचन॥
स्वादुषंसदःपितरोवयोधाःकृच्छ्रेश्रितःशक्तीवंतोगभीराः ॥ चित्रसेनाइषुबलाअमृध्राःसतोवीरा
उरवोव्रातसाहाः ॥ ब्राह्मणासःपितरःसोम्यासःशिवेनोद्यावापृथिवीअनेहसा ॥ पूषानःपातुदुरिता
दृतावृधोरक्षामाकिर्नोअघशंसईशत ॥ इहैवस्तंमावियौष्टंविश्वमायुर्व्यश्नुतं ॥ क्रीळंतौपुत्रैर्नप्तृभिर्मो

दमानौस्वेगृहे ॥ वसिष्ठासःपितृवद्वाचमक्रतदेवाँईळानाऋपिवत्स्वस्तये ॥ प्रीताइंवज्ञातयःकाममे
दमानौस्वेगृहे ॥ वसिंष्ठासःपितृवद्वाचंमक्रतदेवाँईळानाक्पिवत्स्वस्तये ॥ तेनोरासंतामुरुगाय
त्यास्मेदेवासोवंधूनुतावसु॥देवान्वसिंष्ठोअमृतान्ववंदेयेविश्वाभुवनाभिप्रंतस्थुः॥ येरूपाणिप्रतिमुंचमानाअसुराःसंतः
मुद्यधूयंपातस्व० ॥ ३ ॥ अथ पिंडपितृयज्ञादिमंत्राः ॥ अपहताअसुरारक्षांसिवेदिष
स्वधयाचरंति ॥ परापुरोनिपुरोयेभरंत्यग्निष्टाँल्लोकात्प्रणुदात्वस्मात् ॥ अग्निमांत
दः ॥ वीरंमेदत्तपितरः ॥ ३ ॥ यदंतरिंक्षंपृथिवीमुतद्यांयन्मातरंपितरंवाजिहिंसिम ॥ यथायमरपा
स्मादेनसोगार्हपत्यःप्रमुंचतुकरोतुमामनेनसं ॥ आधत्तपितरोगर्भंकुमारंपुष्करस्रजं ॥ संवत्सरोधिपतिःप्राणदोनोहोरा
असंत् ॥ ग्रीष्मोहेमंतऋतवःशिवानोवर्षाःशिवाअभयाःशरन्नः ॥ भूतंभविष्यदभयंविश्व
त्रेकृणुतांदीर्घमायुः ॥ आपोमरीचीःप्रवहंतुनोधियोधातासमुद्रोवहंतुपापं ॥ ऊर्जंप्र
मस्तुमेब्रह्माधिगुप्तःस्वाराक्षराणि ॥ विश्वआदित्यावसवश्चदेवारुद्रागोप्तारोमरुतःसदंतु ॥ (अत्रपितरोमादयध्वं यथाभाग
जाममृतंपिन्वमानःप्रजापतिर्मयिपरमेष्ठीदधातु॥१॥ इति पिंडपि०॥ (अत्रपितरोमादयध्वं यथाभाग
मावृषायध्वं।अमीमदंतपितरोयथाभागमावृषायीषत । एतद्वःपितरोवासोमानोतोन्यत्पितरोयुंग्ध्वम्॥)

## ।। अथाभिश्रवणसूक्तानि ।।

तत्रादौदेवसूक्तानि ।। ।। सहस्रशीर्षा० वर्गाः ३ ।। अग्निमीळे० व० २ ।। ममाग्नेवर्चोवि
हवेष्व० व० २ ।। नासदासीन्नोसदासीत्तदानींनासीद्रजोनोव्योमापरोयत् ।। किमावरीवः
कुहकस्यशर्मन्नंभःकिमासीद्गहनंगभीरं।। नमृत्युरासीदमृतंनतर्हिनरात्र्याअह्नआसीत्प्रकेतः ।। आनी
दवातंस्वधयातदेकंतस्माद्धान्यंनपरःकिंचनास।। तमआसीत्तमसागूळ्हमग्रेप्रकेतंसलिलंसर्वमाइदं।। तु
च्छ्येनाभ्वपिहितंयदासीत्तपसस्तन्महिनाजायतैकंकामस्तदग्रेसमवर्तताधिमनसोरेतःप्रथमंयदासी
त् ।। सतोबंधुमसतिनिरविंदन्हृदिप्रतीष्याकवयोमनीषातिरश्चीनोविततोरश्मिरेषामधःस्विदासी३
दुपरिस्विदासी३त् ।। रेतोधाआसन्महिमानआसन्स्वधाअवस्तात्प्रयतिःपरस्तात् ।। कोअ
द्धावेदकइहप्रवोचत्कुतआजाताकुतइयंविसृष्टिः ।। अर्वाग्देवाअस्यविसर्जनेनाथाकोवेदयत
आबभूव ।। इयंविसृष्टिर्यतआबभूवयदिवादधेयदिवान ।। योअस्याध्यक्षःपरमेव्योमन्त्सो

अंगवेदयादिवानवेद ॥ १ ॥ योयज्ञोविश्वतस्तंतुभिस्ततएकशतंदेवकर्मेभिरायतः ॥ इमेवयंतिपि
तरोयआययुःप्रवयापवयेत्यासतेतते ॥ पुमाँएनंतनुतउत्कृणत्तिपुमान्वितत्नेअधिनाकेअस्मिन् ॥
इमेमयूखाउपसेदुरूसदःसामानिचक्रुस्तसराण्योतवे ॥ कासीत्प्रमाप्रतिमाकिंनिदानमाज्यंकिमासी
त्परिधिःकआसीत् ॥ छंदःकिमासीत्प्रउगंकिमुक्थंयद्देवादेवमयजंतविश्वे ॥ अग्नेर्गायत्र्यभवत्सयु
ग्वोष्णिहयासविताससंबभूव ॥ अनुष्टुभासोमउक्थैर्महस्वान्बृहस्पतेर्बृहतीवाचमावत् ॥ विराण्मित्राव
रुणयोरभिश्रीरिंद्रस्यत्रिष्टुबिहभागोअह्नः ॥ विश्वान्देवान्जगत्याविवेशतेनचाक्लृप्रऋषयोमनुष्याः ॥
चाक्लृप्रेतेनऋषयोमनुष्यायज्ञेजातेपितरोनःपुराणे ॥ पश्यन्मन्येमनसाचक्षसातान्यइमंयज्ञमयजंत
पूर्वे ॥ सहस्तोमाः० ऋक् १ ॥ सूक्तं ॥२॥ नतद्दिवानपृथिव्यानुमन्येनयज्ञेननोतशमीभिराभिः ॥
उब्जंतुतंसुभ्व१ःपर्वतासोनिहीयतामतियाजस्ययष्टा ॥ अतिवायोमरुतोमन्यतेनोब्रह्मवायःक्रियमा
णंनिनित्सात् ॥ तपूंषितस्मैवृजिनानिसंतुब्रह्मद्विषमभितंशोचतुद्यौः ॥ किमंगत्वाब्रह्मणःसोमगोपां

किमंगत्वांहुरभिशस्तिपांनः ॥ किमंगनंःपश्यसिनिंद्यमांनान्ब्रह्मद्विषेतपुंषिंहेतिमंस्य ॥ अवंतुमामु
षसोजायंमानाअवंतुमासिंधवःपिन्वंमानाः ॥ अवंतुमापर्वतासोध्रुवासोवंतुमापितरोदेवहूंतौ ॥ वि
श्वदानींसुमनंसःस्यामपश्येंमनुसूर्यमुच्चरंतं ॥ तथांकरद्वसुंपतिर्वसूंनांदेवाँओहानोवसागंमिष्ठः ॥ १ ॥
इंद्रोनेदिंष्ठमवसागंमिष्ठःसरंस्वतीसिंधुंभिःपिन्वंमाना ॥ पर्जन्योनओषंधीभिर्मयोभुरग्निःसुशंसंःसुहवंः
पितेव॥विश्वेदेवासआ०ऋ.१॥ योवोंदेवाघृतस्नुंनाहव्येनंप्रतिभूषंति॥तंविश्वउपंगच्छथ॥ उपंनःसून
वोगिरंःशृण्वंत्वमृतंस्यये ॥ सुमृळीकाभंवंतुनः ॥ विश्वेदेवाऋतावृधंऋतुभिर्हवनश्रुतः॥ जुषंतांयुज्यं
पयः ॥ २ ॥ स्तोत्रमिंद्रोंमरुद्गणस्त्वष्टंमान्मित्रोअर्यमा ॥ इमाहव्याजुषंतनः ॥ इमंनोअग्नेअध्व
रंहोतंर्वयुनशोयंज ॥ चिकित्वान्दैव्यंजनं ॥ विश्वेदेवाःशृ०ऋ० १ ॥ विश्वेदेवाममंशृण्वंतुयज्ञियां
उभेरोदंसीअपांनपाच्चमन्मं ॥ मावोवचांसिपरिचक्ष्यांणिवोचंसुम्नेष्विद्वोअंतमामदेम॥ येकेचज्मा०
ऋ. १ ॥ अग्नींपर्जन्यावंवतंधियंमेस्मिन्हवेंसुहवासुष्टुतिंनंः ॥ इळांमन्योजनयद्गर्भंमन्यःप्रजावंती

रिषआधंत्तमस्मे ॥ स्तीर्णेंबर्हिषिंसमिधानेअग्नौसूक्तेनंमहानमसाविवासे ॥ अस्मिन्नोअद्यविदथे
यजत्राविश्वेदेवाहविर्षिमादयध्वं ॥ २ ॥ सू० ३ ॥ अस्तुश्रौषट्पुरोअग्निंधियादधआनुतच्छर्धोदि
व्यंवृणीमहइंद्रवायूवृणीमहे ॥ यद्धक्राणाविवस्वतिनाभासंदायिनव्यसी ॥ अधप्रसूनउपयंतुधीत
योदेवाँऽअच्छानधीतयः ॥ यद्धत्यन्मित्रावरुणावृतादध्यादृदाथेअनृतंस्वेनमन्युनादक्षस्यस्वेनमन्यु
ना ॥ युवोरित्थाधिसद्मस्वपश्यामहिरण्ययं ॥ धीभिश्चनमनसास्वेभिरक्षभिःसोमस्यस्वेभिरक्षभिः॥
युवांस्तोमेभिर्देवयंतोअश्विनाश्रावयंतइवश्लोकमायवोयुवांहव्याभ्याऽवयः ॥ युवोर्विश्वाअधिश्रि
यः पृक्षश्चविश्ववेदसा ॥ प्रुषायंतेवांपवयोहिरण्ययेरथेदस्राहिरण्यये ॥ अचेतिदस्राव्यु१नाकमृण्व
थोयुंजतेवांरथयुजोदिविष्टिष्वध्वस्मानोदिविष्टिषु॥ अधिवांस्थामबंधुरेरथेदस्राहिरण्यये ॥ पथेवयं
तावनुशासंतारजोजंसाशासंतारजः ॥ शचीभिर्नःशचीवसूदिवानक्तंदशस्यतं ॥ मावांरातिरुपदस
त्कदाचनास्मद्रातिःकदाचन ॥ १ ॥ वृषन्निंद्रवृषपाणासइंदवइमेसुताअद्रिषुतासउद्भिदस्तुभ्यंसु

तासंउक्षिदंः।।तेत्वामंदंतुदावनेमहेचित्रायराधसे।।गीर्भिर्गिर्वाहःस्तवमानआगंहिसुमृळीकोनआगंहि।
ओषूणोअग्नेशृणुहित्वमीळितोदेवेभ्योब्रवसियज्ञियेभ्योराजभ्योयज्ञियेभ्यः ।। यद्वत्यामंगिरोभ्यो
धेनुंदेवाअदत्तन ।। वितांदुह्रेअर्यमाकर्तरीसचाँऽएषतांवेदमेसचा ।। मोषुवोअस्मदभितानि
पौंस्यासनाभूवन्द्युम्नानिमोतजारिषुरस्मत्पुरोतजारिषुः ।। यद्वश्चित्रंयुगेयुगेनव्यंघोषादमर्त्यं ।।
अस्मासुतन्मरुतोयच्चदुष्टरंदिधृतायच्चदुष्टरं ।। दध्यङ्हमेजनुषंपूर्वोऽअंगिराःप्रियमेधःकण्वोअत्रि
मनुर्विदुस्तेमेपूर्वेमनुर्विदुः ।। तेषांदेवेष्वायतिरस्माकंतेषुनाभयः ।। तेषांपदेनमत्यानमेगिरेंद्राग्नीआ
नमेगिरा।।होतायक्षद्वनिनोवंतवार्यंबृहस्पतिर्यजतिवेनउक्षभिःपुरूवारेभिरुक्षभिः।।जगृभ्माद्दूरआदिशं
श्लोकमद्रेरधत्मना।।अधारयदररिंदानिसुक्रतुःपुरूसद्मानिसुक्रतुः ।। येदेवासोदिव्येकादशस्थपृथिव्या
मध्येकादशस्थ ।। अप्सुक्षितोमहिनैकादशस्थतेदेवासोयज्ञमिमंजुषध्वं ।।२।।सू०४।। यज्ञोदेवानां
प्रत्येतिसुम्नमादित्यासोभवतामृळयंतः ।। आवोर्वाचीसुमतिर्ववृत्यादंहोश्चिद्यावरिवोवित्तरासत्।।उप

नोदेवाअवसागमंत्वंगिरसांसामभिःस्तूयमानाः॥ इंद्र इंद्रियैर्मरुतोमरुद्भिरादित्यैर्नोअदितिःशर्मयंसत्॥
तन्नइंद्रस्तद्वरुणस्तदग्निस्तदर्यमातत्सविताचनोधात्॥तन्नोमित्रो०॥१॥ ॥अथराक्षोघ्नसू०॥ कृणु
ष्वपाजःप्रसितिंनपृथ्वीयाहिराजेवामवाँइभेन॥तृष्वीमनुप्रसितिंद्रूणानोस्तासिविध्यरक्षसस्तपिष्ठैः ॥
तवभ्रमासआशुयापतंत्यनुस्पृशधृषताशोशुचानः॥ तपूंष्यग्नेजुह्वापतंगानसंदितोविसृजविष्वगुल्काः
॥ प्रतिस्पशोविसृजतूर्णितमोभवापायुर्विशोअस्याअदब्धः ॥ योनोदूरेअघशंसोयोअंत्यग्नेमाकि
ष्टेव्यथिरादधर्षीत् ॥ उदग्नेतिष्ठप्रत्यातनुष्वन्य१मित्राँओषतात्तिग्महेते ॥ योनोअरातिंसमिधा
नचक्रेनीचातंधक्ष्यतसंनशुष्कं॥ऊर्ध्वोभवप्रतिविध्याध्यस्मदाविष्कृणुष्वदैव्यान्यग्ने ॥ अवस्थिरातनु
हियातुजूनांजामिमजामिंप्रमृणीहिशत्रून् ॥ १ ॥ सतेजानातिसुमतिंयविष्ठयईवतेब्रह्मणेगातुमै
रत् ॥ विश्वान्यस्मैसुदिनानिरायोद्युम्नान्यर्योविदुरोअभिद्यौत् ॥ सेदग्नेअस्तुसुभगःसुदानुर्यस्त्वा
नित्येनहविषायउक्थैः ॥ पिप्रीषतिस्वआयुषिदुरोणेविश्वेदस्मैसुदिनासासदिष्टिः ॥ अर्चामितेसु

मृतिघोष्यर्वाक्संतैवावातांजरतामियंगीः ॥ स्वश्वांस्त्वासुरथांमर्जयेमास्मेक्षत्राणिधारयेरनुद्यून् ॥
इहत्वाभूर्याचेरदुपत्मन्दोषांवस्तर्दीदिवांसमनुद्यून् ॥ क्रीळंतस्त्वासुमनसःसपेमाभिद्युम्नातंस्थिवां
सोजनानां ॥ यस्त्वास्वश्वःसुहिरण्योअग्नउपयातिवसुमतारथेन ॥ तस्यंत्राताभवसितस्यसखा
यस्तेआतिथ्यमानुषग्जुजोषत् ॥ २ ॥ महोरुजामिबंधुतावचोभिस्तन्मांपितुर्गोतमादन्वियाय ॥
त्वंनोअस्यवचसश्चिकिद्धिहोतर्यविष्ठसुक्रतोदमूनाः ॥ अस्वमजस्तरणयःसुशेवाअतंद्रासोवृकाअ
श्रमिष्ठाः ॥ तेपायवःसध्र्यंचोनिषद्याग्नेतवनःपांत्वमूर ॥ येपायवोमामतेयंतेअग्नेपश्यंतोअंधंदु
रितादरक्षन् ॥ ररक्षतान्त्सुकृतोविश्ववेदादिप्संतइद्रिपवोनाहदेभुः ॥ त्वयावयंसधन्यं१स्त्वोता
स्तवप्रणीत्यश्यामवाजान् ॥ उभाशंसासूदयसत्यतातेनुष्ठुयाकृणुह्यन्हयाण ॥ अयातेअग्नेसमिधा
विधेमप्रतिस्तोमंशस्यमानंगृभाय ॥ दहाशसोरक्षसःपाह्य१स्मान्द्रुहोनिदोमित्रमहोअवद्यात्॥ ३ ॥
सू०२ ॥ अग्नेहंसिन्य१त्रिणंदीद्यन्मर्त्येष्वा ॥ स्वेक्षयेशुचिव्रत ॥ उत्तिष्ठसिस्वाहुतोघृतानिप्र

निमोदसे॥यस्त्वास्रुचःसमस्थिरन्॥सआहुतोविरोचतेग्निरीळेन्योगिरा ॥ स्रुचाप्रतीकमज्यते॥घृतेना
ग्निःसमंज्यतेमधुप्रतीकआहुतः॥ रोचमानोविभावसुः॥जरमाणःसमिध्यसेदेवेभ्योहव्यवाहन॥ तंत्वा
हवंतमर्त्याः॥१॥तंमर्ताअमर्त्यंघृतेनाग्निंसपर्यत॥अदाभ्यंगृहपतिं॥अदाभ्येनशोचिषाग्नेरक्षस्त्वंदह॥
गोपाऋतस्यदीदिहि ॥ सत्वमग्नेप्रतीकेनप्रत्योषयातुधान्यः ॥ उरुक्षयेषुदीद्यत् ॥ तंत्वागीर्भिरुरु
क्षयाहव्यवाहंसमीधिरे ॥ यजिष्ठंमानुषेजने ॥ २ ॥ सूक्तं ३ ॥ रक्षोहणंवाजिनमाजिघर्मिमित्रंप्र
थिष्ठमुपयामिशर्म ॥ शिशानोअग्निःक्रतुभिःसमिद्धःसनोदिवासरिषःपातुनक्तं ॥ अयोदंष्ट्रोअर्चि
षायातुधानानुपस्पृशजातवेदःसमिद्धः ॥ आजिह्वयामूरदेवान्रभस्वक्रव्यादोवृक्त्व्यपिधत्स्वासन् ॥
उभोभयाविन्नुपधेहिदंष्ट्राहिंस्रःशिशानोवरंपरंच ॥ उतांतरिक्षेपरियाहिराजन्जंभैःसंधेह्यभियातुधा
नान् ॥ यज्ञैरिषूःसंनममानोअग्नेवाचाशल्याँअशनिभिर्दिहानः ॥ ताभिर्विध्यहृदयेयातुधानान्प्रती
चोबाहून्प्रतिभंग्ध्येषाम् ॥ अग्नेत्वचंयातुधानस्यभिंधिहिंस्राशनिर्हरसाहंत्वेनं ॥ प्रपर्वाणिजातवेदः

शृणीहिक्रव्याक्रंविष्णुर्विचिनोतुवृक्णं ॥ १ ॥ यत्रेदानींपश्यसिजातवेदस्तिष्ठंतमग्नउतवाचरंतं ॥
यद्वांतरिक्षेपथिभिःपतंतंतमस्ताविध्यशर्वाशिशानः ॥ उतालब्धंस्पृणुहिजातवेदआलेभानादृष्टिभि
र्यातुधानात् ॥ अग्नेपूर्वोनिजहिशोशुचानआमादःक्ष्विंकास्तमदंत्वेनीः ॥ इहप्रब्रूहियतमःसोअग्ने
योयातुधानोयइदंकृणोति ॥ तमारभस्वसमिधायविष्ठनृचक्षसश्चक्षुषेरंधयैनं ॥ तीक्ष्णेनाग्नेचक्षुषार
क्षयज्ञंप्रांचंवसुभ्यःप्रणयप्रचेतः ॥ हिंस्रंरक्षांस्यभिशोशुचानंमात्वादभन्यातुधानानृचक्षः ॥ नृच
क्षारक्षःपरिपश्यविक्षुतस्यत्रीणिप्रतिशृणीत्यग्रा ॥ तस्याग्नेपृष्टीर्हरसाशृणीहित्रेधामूलंयातुधानस्य
वृश्च ॥ २ ॥ त्रिर्यातुधानःप्रसितिंतएत्वृतंयोअग्नेअनृतेनहंति ॥ तमर्चिषास्फूर्जयन्जातवेदःसम
क्षमेनंगृणतेनिवृंग्धि ॥ तदग्नेचक्षुःप्रतिधेहिरेभेशफारुजंयेनपश्यसियातुधानं ॥ अथर्ववज्ज्योतिषा
दैव्येनसत्यंधूर्वंतमचितंन्योष ॥ यदग्नेअद्यमिथुनाशपातोयद्वाचस्तृष्टंजनयंतरेभाः ॥ मन्योर्मनसः
शरव्याजायतेयातयाविध्यहृदयेयातुधानान् ॥ परांशृणीहितपसायातुधानान्पराग्नेरक्षोहरसाशृणी

हि ॥ पराचिंषामूरंदेवान्छृणीहिपरांसुतृपोंअभिशोशुंचानः ॥ परांद्यदेवाहंजिनंशृणंतुप्रत्यगेनंशपथां
यंतुतुष्टाः॥ वाचास्तेनंशरंवकच्छंतुमर्मन्विश्वंस्यैतुप्रसितिंयातुधानंः॥३॥ यःपौरुंषेयेणक्रविषांसमङ्क्ते
योअश्व्येनपशुनांयातुधानंः॥ योअघ्न्यायाभरंतिक्षीरमंग्नेतेषांशीर्षाणिहरसापिंवृश्च॥ संवत्सरीणंपयं
उस्रियांयास्तस्यमाशीद्यातुधानोंनृचक्षः॥पीयूषंमग्नेयतमस्तितृंप्सात्तंप्रत्यंचंमर्चिषाविध्यमर्मंन्॥ वि
षंगवांयातुधानाःपिबंत्वाहंश्च्यंतामदितयेदुरेवाः॥ परैंनान्देवःसंविताददातुपरांभागमोषंधीनांजयंतां॥
सनादंग्नेमृणसियातुधानान्नत्वारक्षांसिपृतंनासुजिग्युः ॥ अनुंदहसहमूरान्क्रव्यादोमातेंहेत्यामुंक्ष
तदैव्यायाः॥ त्वंनोंअग्नेअधरादुदंक्तात्त्वंपश्चादुतरंक्षापुरस्तांत् ॥ प्रतितेतेंअजरांसस्तपिंष्टाअघशंसं
शोशुचतोदहंतु ॥ ४ ॥ पश्चात्पुरस्तांदधरादुदंक्तात्कविःकाव्येंनपरिंपाहिराजन् ॥ सखेसखांयमज
रोजरिम्णेग्नेमर्ताँअमंर्त्यस्त्वंनंः॥परिंत्वाग्नेपुरंवयंविप्रंसहस्यधीमहि॥धृषद्वंर्णंदिवेदिंवेहंतारंभंगुरावंतां॥
विषेणंभंगुरावंतःप्रतिंष्मरक्षसोंदह ॥ अग्नेतिग्मेनंशोचिषातपुरग्राभिर्ऋष्टिभिः ॥ प्रत्यंग्नेमिथुनादंह

यातुधानाकिमीदिना ॥ संत्वाशिशामिजागृह्यदंब्धंविप्रमन्मभिः ॥ प्रत्यंग्ने०क०१॥५॥सू०४॥ ब्रह्म
णाग्निःसंविदानोरक्षोहाबांधतामितः ॥ अमीवायस्तेगर्भंदुर्णामायोनिमाशये ॥ यस्तेगर्भममीवादुर्णा
मायोनिमाशये ॥ अग्निष्टंब्रह्मणासहनिष्क्रव्यादमनीनशत् ॥ यस्तेहंतिपतयंतंनिषत्स्नुंयःसरीसृपं ॥
जातंयस्तेजिघांसतितमितोनाशयामसि॥ यस्तऊरूविहरत्यंतरादंपतीशये॥ योनिंयोअंतरारेह्लितमि
तो०॥यस्त्वाभ्रातापतिर्भूत्वाजारोभूत्वानिपद्यते॥प्रजांयस्तेजिघांसतितं०॥यस्त्वास्वप्नेनतमसामोह
यित्वानिप०॥प्रजांयस्तेजिघांसतितमितो०॥१॥अथसोमसूक्तानि॥ ॥त्वंसोमप्रचिकितोमनीषात्वं
रजिष्ठमनुनेषिपंथां ॥ तवप्रणीतीपितरोनइंदोदेवेषुरत्नमभजंतधीराः ॥ त्वंसोमक्रतुभिःसुक्रतुर्भूस्त्वंद
क्षैःसुदक्षोविश्ववेदाः ॥ त्वंवृषावृषत्वेभिर्महित्वाद्युम्नेभिर्द्युम्न्यभवोनृचक्षाः ॥ राज्ञोनुतेवरुणस्यव्रता
निबृहद्गभीरंतवसोमधाम ॥ शुचिष्ट्वमसिप्रियोनमित्रोदक्षाय्योअर्यमेवासिसोम ॥ यातेधामानिदिवि
यापृथिव्यांयापर्वतेष्वोषधीष्वप्सु ॥ तेभिर्नोविश्वैःसुमनाअहेळन्राजन्त्सोमप्रतिहव्यागृभाय ॥ त्वं

सोमासिसत्पतिस्त्वंराजोतवृत्रहा ॥ त्वंभद्रोअसिक्रतुः ॥ १ ॥ त्वंचसोमनोवशोजीवातुंनमरामहे ॥
प्रियस्तोत्रोवनस्पतिः ॥ त्वंसोममहेभगंत्वंयूनऋतायते ॥ दक्षंदधासिजीवसे ॥ त्वंनःसोमविश्वतोर
क्षाराजन्नघायतः॥नरिष्येत्वावतःसखा॥सोमयास्तेमयोभुवऊतयःसंतिदाशुषे॥ताभिर्नोविताभव॥इ
मंयज्ञमिदंवचोजुजुषाणउपागहि॥सोमत्वंनोवृधेभव॥२॥सोमगीर्भिष्ट्वावयंवर्धयामोवचोविदः॥सुमृ
ळीकोनआविश ॥ गयस्फानोअमीवहावसुवित्पुष्टिवर्धनः॥सुमित्रःसोमनोभव ॥ सोमरारंधिनोहृदि
गावोनयवसेष्वा ॥ मर्यइवस्वओक्ये ॥ यःसोमसख्येतवरारणद्देवमर्त्यः ॥ तंदक्षःसचतेकविः ॥ उरु
ष्याणोअभिशस्तेःसोमनिपाह्यंहसः ॥ सखासुशेवएधिनः ॥ ३ ॥ आप्यायस्वसमेतुते विश्वतःसोमवृ
ष्ण्यं ॥ भवावाजस्यसंगथे ॥ आप्यायस्वमदिन्तमसोमविश्वेभिरंशुभिः ॥ भवानःसुश्रवस्तमःसखावृधे ॥ संतेपयांसिसमुयंतुवाजाःसंवृ
ष्ण्यान्यभिमातिषाहः ॥ आप्यायमानोअमृतायसोमदिविश्रवांस्युत्तमानिधिष्व ॥ यातेधामानिह
विषायजंतिताते विश्वापरिभूरस्तुयज्ञं ॥ गयस्फानःप्रतरणःसुवीरोवीरहाप्रचरासोमदुर्यान् ॥ सोमो

धे० ऋक् १ ॥ ४ ॥ अषाळ्हंयुत्सुपृतनासुपप्रिंस्वर्षामप्सांवृजनस्यगोपां ॥ भरेषुजांसुक्षितिंसुश्र
वसंजयंतंत्वामनुमदेमसोम ॥ त्वमिमाओषधीःसोमविश्वास्त्वमपोअजनयस्त्वंगाः ॥ त्वमाततंथोर्व१
तरिक्षंत्वंज्योतिषावितमोववर्थ ॥ देवेननोमनसादेवसोमरायोभागंसहसावन्नभियुध्य ॥ मात्वातन
दीशिषेवीर्यस्योभयेभ्यःप्रचिकित्सागविष्टौ ॥ ५ ॥ सूक्तं २ ॥ स्वादिष्ठया० वर्ग २ ॥ सू० ३ ॥
स्वादोरभक्षिवयसःसुमेधाःस्वाध्योवरिवोवित्तरस्य॥ विश्वेयंदेवाउतमर्त्यासोमधुब्रुवंतोअभिसंचरंति॥
अंतश्चप्रागाअदितिर्भवास्यवयाताहरसोदैव्यस्य ॥ इंदविंद्रस्यसख्यंजुषाणःश्रौष्टीवधुरमनुरायऋ
ध्याः ॥ अपामसोमममृताअभूमागन्मज्योतिरविदामदेवान् ॥ किंनूनमस्मान्कृणवदरातिःकिमुधू
र्तिरमृतमर्त्यस्य ॥ शंनोभवहृदआपीतइंदोपितेवसोमसूनवेसुशेवः ॥ सखेवसख्यउरुशंसधीरःप्रण
आयुर्जीवसेसोमतारीः॥ इमेमापीतायशसउरुष्यवोरथंनगावःसमनाहपर्वसु ॥ तेमारक्षंतुविस्रसश्चरि
त्रादुतमास्रामाद्यवयंत्विंदवः ॥१॥ अग्निंनमामथितंसंदिदीपःप्रचक्षयकृणुहिवस्यसोनः ॥ अथाहि

तेमदआसोममन्येरेवाँइवप्रचरापुष्टिमच्छ ॥ इषिरेणतेमनसासुतस्यभक्षीमहिपित्र्यस्थरायः ॥ स
मराजन्प्रणआयूंषितारीरहानीवसूर्योवासराणि ॥ सोमराजन्मृळयानःस्वस्तितवस्मसिव्रत्याउस्तस्य
विद्धि ॥ अलर्तिदक्षउतमन्युरिंदोमानोअर्योअनुकामंपरादाः ॥ त्वंहिनस्तन्वःसोमगोपागात्रेगात्रे
निषसत्थानुचक्षाः ॥ यत्तेवयंप्रमिनामव्रतानिसनोमृळसुषखादेववस्यः ॥ ऋदूदरेण० क्र १ ॥ २ ॥
अपत्याअस्थु० क्र० १॥ योनइंदुःपितरोहृत्सुपीतोमर्त्योमर्त्याआविवेश॥तस्मैसोमायहविषाविधेममृ
ळीकेअस्यसुमतौस्याम ॥ त्वंसोमपितृभिःसंविदानोनुद्यावापृथिवीआततंथ॥ तस्मैतइंदोहविषाविधे
मवयंस्यामपतयोरयीणां ॥ त्रातारोदेवाअधिवोचतानोमानोनिद्राईशतमोतजल्पिः ॥ वयंसोमस्य
विश्वहप्रियासःसुवीरासोविदथमावदेम ॥ त्वंनःसोमविश्वतोवयोधास्त्वंस्वर्विदाविशानृचक्षाः ॥
त्वंनइंदऊतिभिःसजोषाःपाहिपश्चातादुतवापुरस्तात् ॥ ३ ॥ सू० ४ ॥ इंद्रासोमातपतंरक्षउब्ज
तंन्यर्पयतंवृषणातमोवृधः ॥ पराशृणीतमचितोन्योषतंहतंनुदेथांनिशिशीतमत्रिणः ॥ इंद्रासोमास

मघशंसमभ्यं१घंतपुर्यस्तुचरुरंग्रिवाँइव ॥ ब्रह्मद्विषेक्रव्यादेघोरचंक्षसेद्वेषोधत्तमनवायंकिमीदिने ॥
इंद्रासोमादुष्कृतोवव्रेअंतरंनारंभणेतमसिप्रविध्यतं ॥ यथानातःपुनरेकंश्चनोदयत्तद्वामस्तुसहसे
मन्युमच्छवः ॥ इंद्रासोमावर्तयतंदिवोवधंसंपृथिव्याअघशंसायतर्हणं ॥ उत्तक्षतंस्वर्य१पर्वतेभ्योयेन
रक्षोवावृधानंनिजूर्वथः ॥ इंद्रासोमावर्तयतंदिवस्पर्यग्नितप्तेभिर्युवमश्महन्मभिः ॥ तपुर्वधेभिरजरे
भिरत्रिणोनिपर्शानेविध्यतंयंतुनिस्वरं ॥ १ ॥ इंद्रासोमापरिवांभूतुविश्वतइयंमतिःकक्ष्याश्वेववा
जिना ॥ यांवांहोत्रांपरिहिनोमिमेधयेमाब्रह्माणिनृपतीवजिन्वतं ॥ प्रतिस्मरेथांतुजयंद्भिरेवैर्हतंद्रु
होरक्षसोभंगुरावतः ॥ इंद्रासोमादुष्कृतेमासुगंभूद्योनःकदाचिदभिदासतिद्रुहा ॥ योमापाकेनमनं
साचरंतमभिचष्टेअनृतेभिर्वचोभिः ॥ आपइवकाशिनासंगृभीताअसन्नस्त्वासतइन्द्रवक्ता ॥ येपाक
शंसंविहरंतएवैर्येवाभद्रंदूषयंतिस्वधाभिः ॥ अहयेवातान्प्रददातुसोमआवादधातुनिर्ऋतेरुपस्थे ॥
योनोरसंदिप्सतिपित्वोअग्नेयोअश्वानांयोगवांयस्तनूनां ॥ रिपुःस्तेनःस्तेयकृद्दभ्रमेतुनिषहीयतांत

न्वा३तनांच ॥ २ ॥ पुरःसोअंस्तुतन्वा३तनांचतिस्रःपृथिवीरुधोअंस्तुविश्वाः ॥ प्रतिशुष्यतु
यशोअस्यदेवायोनोदिवादिप्संतियश्चनक्तं॥सुविज्ञानंचिकितुषेजनायसच्चासच्चवचसीपस्पृधाते ॥ त
योर्यत्सत्यंयतरदृजीयस्तदित्सोमोवतिहंत्यासत्॥नवाउसोमोवृजिनंहिनोतिनक्षत्रियंमिथुयाधारयंतं॥
हंतिरक्षोहंत्यासद्वदंतमुभाविंद्रस्यप्रसितौशयाते॥यदिवाहमनृतदेवआसमोघंवादेवाँअप्यूहेअग्ने॥कि
मस्मभ्यंजातवेदोहृणीषेद्रोघवाचस्तेनिर्ऋथंसचंतां ॥ अद्यामुरीययदियातुधानोअस्मियदिवायुस्ततप
पूरुषस्य॥अधासवीरैर्दशभिर्वियूयायोमामोघंयातुधानेत्याह॥३॥योमायातुंयातुधानेत्याहयोवारक्षाः
शुचिरस्मीत्याह॥इंद्रस्तंहंतुमहतावधेनविश्वस्यजंतोरधमस्पदीष्ट॥ प्रयाजिगातिखर्गलेवनक्तमपद्रुहा
तन्वं१गूहमाना ॥ वव्राँअनंताँअवसापदीष्टग्रावाणोघ्नंतुरक्षसउपब्दैः ॥ वितिष्ठध्वंमरुतोविक्ष्वि१च्छ
तगृभायतरक्षसःसंपिनष्टन ॥ वयोयेभूत्वीपतयंतिनक्तभिर्येवारिपोदधिरेदेवेअध्वरे ॥ प्रवर्तयदि
वोअश्मानमिंद्रसोमशितंमघवन्त्संशिशाधि ॥ प्राक्तादपाक्तादधरादुदक्तादभिजहिरक्षसःपर्वतेन ॥

एतउत्येपतयंतिश्वयातवइंद्रंदिप्संतिदिप्सवोदाभ्यं ॥ शिशीतेशक्रःपिशुनेभ्योवधंनूनंसृजदशानिंया
तुमद्भ्यः ॥ ४ ॥ इंद्रोयातूनामभवत्पराशरोहविर्मथीनामभ्या३विवासतां ॥ अभीदुशक्रःपरशुर्यथाव
नंपात्रेवभिंदन्सतएतिरक्षसः ॥ उलूकयातुं० ऋ०१ ॥ मानोरक्षोअभिनंड्यातुमावतामपोच्छ
तुमिथुनायाकिमीदिनां ॥ पृथिवीनःपार्थिवात्पात्वंहसोंतरिक्षंदिव्यात्पात्वस्मान् ॥ इंद्रंजहिपुमां
संयातुधानमुतस्त्रियंमाययाशाशदानां ॥ विग्रीवासोमूरदेवाऋदंतुमातेदृशन्त्सूर्यमुच्चरंतं ॥ प्रतिच
क्ष्व० ऋ० १ ॥ ५ ॥ सू० ५ ॥ सोमएकेभ्यःपवतेघृतमेकउपासते ॥ येभ्योमधुप्रधावतितां
श्चिदेवापिगच्छतात् ॥ तपसायेअनाधृष्यास्तपसायेस्वर्ययुः ॥ तपोयेचक्रिरेमहस्तांश्चि० ॥ येयु
ध्यंतेप्रधनेषुशूरासोयेतनूत्यजः ॥ येवासहस्रदक्षिणास्तांश्चि० ॥ येचित्पूर्वऋतसापऋतावानऋ
तावृधः ॥ पितॄन्तपस्वतोयमतांश्चि० ॥ सहस्रणीथाःकवयोयेगोपायंतिसूर्यं ॥ ऋषीन्तपस्वतोयम
तपोजाँअपिगच्छतात्॥१॥श्रद्धासूक्तं ॥श्रद्धयाग्निःसमिध्यतेश्रद्धयाहूयतेहविः ॥ श्रद्धांभगस्यमू

र्धनिवचसावेदयामसि॥प्रियंश्रद्धेददतःप्रियंश्रद्धेदिदासतः॥ प्रियंभोजेषुयज्वस्विदंमउदितंकृधि ॥ य
थादेवाअसुरेषुश्रद्धामुग्रेषुचक्रिरे॥एवंभोजेषुयज्वस्वस्माकमुदितंकृधि॥ श्रद्धांदेवायजमानावायुगो
पाउपासते॥श्रद्धांहृदय्य१याकूत्याश्रद्धयाविंदतेवसु॥श्रद्धांप्रातर्हवामहेश्रद्धांमध्यंदिनंपरि ॥ श्रद्धां
सूर्यस्यनिम्रुचिश्रद्धेश्रद्धापयेहनः॥१॥ हविर्धानसूक्तं ॥ युजेवांब्रह्मपूर्व्यंनमोभिर्विश्लोकएतुपथ्येवसू
रेः॥ शृण्वंतुविश्वेअमृतस्यपुत्राआयेधामानिदिव्यानितस्थुः॥यमेइवयतमानेयदैतंप्रवांभरन्मानुषादे
वयंतः॥आसीदतंस्वमुलोकंविदानेस्वासस्थेभवतमिंदवेनः॥पंचपदानिरुपोअन्वरोहंचतुष्पदीमन्वेमि
व्रतेन॥अक्षरेणप्रतिमिमएतामृतस्यनाभावधिसंपुनामि ॥ देवेभ्यःकमवृणीतमृत्युंप्रजायैकममृतंनावृ
णीत॥बृहस्पतिंयज्ञमकृण्वतऋषिंप्रियांयमस्तन्व१प्रारिरेचीत्॥ सप्तक्षरंतिशिशवेमरुत्वतेपित्रेपुत्रासो
अप्यवीवतन्नृतं ॥ उभेइदस्योभयस्यराजतउभेयतेतेउभयस्यपुष्यतः॥१॥ पितृसूक्तं॥ उदीरतामव
रउत्परासउन्मध्यमाःपितरःसोम्यासः ॥ असुंयईयुरवृकाऋतज्ञास्तेनोवंतुपितरोहवेषु ॥ इदंपि

तुभ्योनमोअस्त्वद्ययेपूर्वासोयउपरासईयुः ॥ येपार्थिवेरजस्यानिषत्तायेवानूनंसुवृजनासुविक्षुआहं
पितॄन्त्सुविदत्राँअविवित्सिनपातंचविक्रमणंचविष्णोः ॥ बर्हिषदोयेस्वधयासुतस्यभजंतपित्वस्तइहा
गमिष्ठाः ॥ बर्हिषदःपितरऊत्यर्वागिमावोहव्याचकृमाजुषध्वं ॥ तआगतावसाशंतमेनाथानःशंयो
ररपोदधात ॥ उपहूताःपितरःसोम्यासोबर्हिष्येषुनिधिषुप्रियेषु ॥ तआगमंतुतइहश्रुवंत्वधिब्रुवंतुतेवंत्व
स्मान् ॥ १ ॥ आच्याजानुदक्षिणतोनिषद्येमंयज्ञमभिगृणीतविश्वे ॥ माहिंसिष्टपितरःकेनचिन्नो
यद्वआगःपुरुषताकराम ॥ आसीनासोअरुणीनामुपस्थेरयिंधत्तदाशुषेमर्त्याय ॥ पुत्रेभ्यःपितरस्तस्य
वस्वःप्रयच्छततइहोर्जंदधात ॥ येनःपूर्वेपितरःसोम्यासोनूहिरेसोमपीथंवसिष्ठाः ॥ तेभिर्यमःसंर
राणोहवींष्युशन्नुशद्भिःप्रतिकाममत्तु ॥ येतातृषुर्देवत्राजेहमानाहोत्राविदःस्तोमतष्टासोअर्कैः ॥
आग्नेयाहिसुविदत्रेभिरर्वाङ्सत्यैःकव्यैःपितृभिर्घर्मसद्भिः ॥ येसत्यासोहविरदोहविष्पाइंद्रेणदेवैःसर
थंदधानाः ॥ आग्नेयाहिसहस्रंदेववंदैःपरैःपूर्वैःपितृभिर्घर्मसद्भिः ॥ २ ॥ अग्निष्वात्ताःपितरएहगच्छ

तसदःसदःसदतसुप्रणीतयः ॥ अत्ताहवींषिप्रयतानिबर्हिष्यथारयिंसर्ववीरंदधातन ॥ त्वमग्नईळितो
जातवेदोवाड्ढव्यानिसुरभीणिकृत्वी ॥ प्रादाःपितृभ्यःस्वधयातेअक्षन्नद्धित्वंदेवप्रयताहवींषि ॥ येचे
हपितरोयेचनेहयांश्चविद्मयाँउचनप्रविद्म ॥ त्वंवेत्थयतितेजातवेदःस्वधाभिर्यज्ञंसुकृतंजुषस्व ॥ येअ
ग्निदग्धायेअनग्निदग्धामध्येदिवःस्वधयामादयंते ॥ तेभिःस्वराळसुनीतिमेतांयथावशंतन्वंकल्पय
स्व ॥ ३ ॥ अथदेवसूक्तं ॥ विश्वेदेवाःशास्तनमायथेहहोतावृतोमनवैयन्निषद्य ॥ प्रमेब्रूतभागधेयं
यथावोयेनपथाहव्यमावोवहानि ॥ अहंहोतान्यसीदंयजीयान्विश्वेदेवामरुतोमाजुनंति ॥ अहरहर
श्विनाध्वर्यवंवांब्रह्मासमिद्भवतिसाहुतिर्वां ॥ अयंयोहोताकिरुसयमस्यकमप्यूहेयत्समंजंतिदेवाः ॥
अहरहर्जायतेमासिमास्यथादेवादधिरेहव्यवाहं ॥ मांदेवादधिरेहव्यवाहमपम्लुक्तंबहुकृच्छ्राचरं
तं ॥ अग्निर्विद्वान्यज्ञंनःकल्पयातिपंचयामंत्रिवृतंसप्ततंतुं ॥ आवोयक्ष्यमृतत्वंसुवीरंयथावो
देवावरिवःकराणि ॥ आबाह्वोर्वज्रमिंद्रस्यधेयामथेमाविश्वाःपृतनाजयाति ॥ त्रीणिशतात्रीस

हस्राण्यग्नेस्त्रिंशच्चदेवानवचासपर्यन् ॥ औक्षन्घृतैरस्तृणन्बर्हिरस्माआदिद्धोतारंन्यसादयंत ॥ १ ॥
॥अथयत्याराधनमंत्राः॥ ॥नानानंवाउनोधियोविव्रतानिजनानां॥तक्षारिष्टंरुतंभिषग्ब्रह्मासुन्वंतमि
च्छतींद्रायेंदोपरिस्रव ॥ जरतीभिरोषधीभिःपर्णेभिःशकुनानांकामारोअश्मभिर्द्युभिर्हिरण्यवंतमि०॥
कारुरहंततोभिषगुपलप्रक्षिणीनना ॥ नानाधियोवसूयवोनुगाइवतस्थिमेंद्रा० ॥ अश्वोवोळ्हासुखंर
थंहसनामुपमंत्रिणः ॥ शेपोरोमण्वंतौभेदौवारिन्मंडूकइच्छ० ॥ १ ॥ शर्यणावतिसोमामिंद्रःपिबतु
वृत्रहा ॥ बलंदधानआत्मनिकरिष्यन्वीर्यंमहदिं० ॥ आपवस्वदिशांपतआर्जीकात्सोममीढ्वः ॥
ऋतवाकेनसत्येनश्रद्धयातपसासुतइंद्रा०॥पर्जन्यवृद्धंमहिषंतंसूर्यस्यदुहिताभरत्॥तंगंधर्वाःप्रत्यगृभ्ण
न्तंसोमेरसमादधुरिं० ॥ ऋतंवदन्नृतद्युम्नसत्यंवदन्त्सत्यकर्मन् ॥ श्रद्धांवदन्त्सोमराजन्धात्रासोमपरि
ष्कृतइं०॥ सत्यमुग्रस्यबृहतःसंस्रवंतिसंस्रवाः॥ संयंतिरसिनोरसाःपुनानोब्रह्मणाहरइं० ॥ २ ॥ यत्र
ब्रह्मापवमानछंदस्यांवाचंवदन् ॥ ग्राव्णासोमेमहीयतेसोमेनानंदंजनयन्निंद्रा०॥ यत्रज्योतिरजस्रंय

स्मिँल्लोकेस्वाँहितं ॥ तस्मिन्मांधेहिपवमानामृतेल्लोकेअक्षितइंद्रा० ॥ यत्रराजावैवस्वतोयत्रावरोधं
नंदिवः ॥ यत्रामूर्यह्वतीरापस्तत्रमाममृतंकृधींद्रायेंदो० ॥ यत्रानुकामंचरणंत्रिनाकेत्रिदिवेदिवः ॥
लोकायत्रज्योतिष्मंतस्तत्र० ॥ यत्रकामानिकामाश्चयत्रब्रध्नस्यविष्टपं ॥ स्वधाचयत्रतृप्तिश्चतत्र
मामृतंकृ०॥ यत्रानंदाश्चमोदाश्चमुदःप्रमुदआसते॥ कामस्ययत्राप्ताःकामास्तत्रमाममृतंकृ०॥३॥
यइंदोःपवमानस्यानुधामान्यक्रमीत् ॥ तमाहुःसुप्रजाइतियस्तेसोमाविधन्मनइंद्रा० ॥ ऋषेमंत्रकृ
तां० ॥ ऋ० १॥ सप्तदिशोनानासूर्याःसप्तहोतारऋत्विजः ॥ देवाआदित्यायेसप्ततेभिःसोमाभिर
क्षनइंद्रा० ॥ यत्तेराजञ्छृतं०॥ऋ० १॥४॥ चरणंपवित्रंविततंपुराणं॥येनपूतस्तरतिदुष्कृतानि॥ तेन
पवित्रेणशुद्धेनपूताः॥अतिपाप्मानमरातिंतरेम॥ लोकस्यद्वारमर्चिमत्पवित्रं॥ ज्योतिष्मद्भ्राजमानं
महस्वत्॥ अमृतस्यधाराबहुधादोहमानं ॥ चरणंनोलोकेसुधितांदधातु ॥१॥ अग्निर्मूर्धाभुवः॥ अनु
नोद्यानुमतिरन्विदनुमतेत्वं॥ हव्यवाहंस्विष्टं॥ ॐतद्ब्रह्म ॥ ॐतद्वायुः॥ ॐतदात्मा॥ ॐतत्सत्यं॥

ॐतत्सर्वं॥ॐतत्पुरोर्नमः॥अंतश्चरतिभूतेषुगुहायांविश्वमूर्तिषु॥ त्वंयज्ञस्त्वंवषट्कारस्त्वमिंद्रस्त्वंरुद्र
स्त्वंविष्णुस्त्वंब्रह्मत्वंप्रजापतिः ॥ त्वंतदापआपोज्योतीरसोमृतंब्रह्मभूर्भुवःसुवरोम्॥१॥लोकःसरस्व
त्यायांत्येषवैदेवयानःपंथास्तमेवान्वारोहंत्याकोशंतोयांत्यवर्तिमेवान्यस्मिन्प्रतिषज्यंप्रतिष्ठांगच्छंति
यदादशंशतंकुर्वंत्यथैकमुत्थानंशतायुःपुरुषःशतेंद्रियआयुष्येवेंद्रियेप्रतितिष्ठंतियदाशतंसहस्रंकुर्वं
त्यथैकमुत्थानंसहस्रसंमितोवाअसौलोकोमुमेवलोकमभिजयंतियदेषांप्रमीयेतयदावाजीयेरन्नथैक
मुत्थानंतद्वितीयं॥१॥भीषास्माद्वातःपवते॥भीषोदेतिसूर्यः॥ भीषास्मादग्निश्चेंद्रश्च॥मृत्युर्धावतिपंच
मइति॥सैषानंदस्यमीमांसाभवति॥युवास्यात्साधुयुवाध्यायकः॥आशिष्ठोदृढिष्ठोबलिष्ठः॥ तस्येयंपृ
थिवीसर्वावित्तस्यपूर्णास्यात्॥ सएकोमानुषआनंदः॥ तेयेशतंमानुषाआनंदाः॥ सएकोमनुष्यगंधर्वा
णामानंदः ॥ श्रोत्रियस्यचाकामहतस्य ॥ तेयेशतंमनुष्यगंधर्वाणामानंदाः॥ सएकोदेवगंधर्वाणामान
दः॥श्रोत्रियस्यचाकामहतस्य॥तेयेशतंमनुष्यगंधर्वाणामानंदाः॥सएकोदेवगंधर्वाणामानंदः॥ श्रो०
॥ तेयेशतंदेवगंधर्वाणामानंदाः॥सएकःपितृणांचिरलोकलोकानामानंदः॥ श्रो०॥तेयेशतंपितृणांचिर

लोकलोकानामानंदाः॥सएकआजानजानांदेवानामानंदः॥ श्रो० ॥ तेयेशतमाजानजानांदेवानामा
नंदाः॥सएकःकर्मदेवानांदेवानामानंदः॥येकर्मणादेवानपियंति॥श्रो० ॥ तेयेशतंकर्मदेवानांदेवानामा
नंदाः ॥ सएकोदेवानामानंदः ॥ श्रोत्रियस्य० ॥ तेयेशतंदेवानामानंदाः ॥ सएकइंद्रस्यानंदः ॥
श्रो०॥तेयेशतमिंद्रस्यानंदाः॥सएकोबृहस्पतेरानंदः॥श्रो०॥तेयेशतंबृहस्पतेरानंदाः॥सएकःप्रजापते
रानंदः॥श्रो०॥तेयेशतंप्रजापतेरानंदाः॥ सएकोब्रह्मणआनंदः॥ श्रो०॥ सयश्चायंपुरुषे॥ यश्चासावा
दित्ये॥ सएकः॥ सयएवंवित् ॥ अस्माल्लोकात्प्रेत्य॥ एतमन्नमयमात्मानमुपसंक्रामति ॥ एतंप्राण
मयमात्मान०॥ एतंमनोमय० ॥ एतंविज्ञानमय०॥ एतमानंदमय०॥ तदप्येषश्लोकोभवति ॥१॥
यतोवाचोनिवर्तंते ॥ अप्राप्यमनसासह ॥ आनंदंब्रह्मणोविद्वान् ॥ नबिभेतिकुतश्चनेति ॥ एतं
हवावनतपति ॥ किमहंसाधुनाकरवं ॥ किमहंपापमकरवमिति ॥ सयएवंविद्वानेतेआ
त्मानंस्पृणुते ॥ उभेह्येवैषएतेआत्मानंस्पृणुते ॥ यएवंवेद ॥ इत्युपनिषत् ॥ २ ॥

अथोपनिषन्मंत्राः ॥ ॥ विदामघवन्विदागातुमनुशंसिषोदिशः ॥ शिक्षाशचीनांपतेपूर्वीणांपुरूव
सो ॥ आभिष्ट्वमभिष्टिभिःप्रचेतनप्रचेतय ॥ इंद्रद्युम्नायनइषएवाहिशक्रः ॥ रायेवाजायवज्रिवः
शविष्ठवज्रिन्नृंजसे ॥ मंहिष्ठवज्रिन्नृंजसआयाहिपिबमत्स्व ॥ विदारायःसुवीर्यंभुवोवाजानांपतिर्वं
शाँअनु ॥ मंहिष्ठवज्रिन्नृंजसेयःशविष्ठःशूराणां ॥ योमंहिष्ठोमघोनांचिकित्वोअभिनोनय ॥ इंद्रो
विदेतमुस्तुषेवशीहिशक्रः ॥ तमूतयेहवामहेजेतारमपराजितं ॥ सनःपर्षदतिद्विषःक्रतुश्छंदऋतंबृह
त् ॥ इंद्रंधनस्यसातयेहवामहेजेतारमपराजितं ॥ सनःपर्षदतिद्विषःसनःपर्षदतिस्रिधः ॥ पूर्वस्ययं
त्तेअद्रिवःसुम्नआधेहिनोवसो ॥ पूर्तिःशविष्ठशस्यतईशेहिशक्रः ॥ नूनंतन्नव्यंसन्यसेप्रभोजनस्य
वृत्रहन् ॥ समन्येषुब्रवामहैशूरोयोगोषुगच्छतिसखासुशेवोअद्वयाः ॥ एवात्येवैवात्यग्ना३इ॥ एवा
त्येवैवाहींद्रा३म् ॥ एवात्येवैवाहिविष्णा३उ ॥ एवात्येवैवाहिपूषा३न् ॥ एवात्येवैवाहिदेवाः३॥ ए
वाहिशक्रोवशीहिशक्रोवशाँअनु ॥ आयोमन्यायमन्यवउपोमन्यायमन्यवे ॥ उपेहिविश्वध ॥ वि

दामघवन्विदोम् ॥१॥ कोयमात्मेतिवयमुपास्महेकतरःसआत्मायेनवापश्यतियेनवाशृणोतियेनवागं
धानाजिघ्रतियेनवावाचंव्याकरोतियेनवास्वादुचास्वादुचविजानातियदेतद्धृदयंमनश्चैतत्संज्ञानमाज्ञा
नंविज्ञानंप्रज्ञानंमेधादृष्टिर्धृतिर्मतिर्मनीषाजूतिःस्मृतिःसंकल्पःक्रतुरसुःकामोवशइतिसर्वाण्येवैतानिप्र
ज्ञानस्यनामधेयानिभवंत्येषब्रह्मैषइंद्रएषप्रजापतिरेतेसर्वेदेवाइमानिचपंचमहाभूतानिपृथिवीवायुरा
काशआपोज्योतींष्येतान्येतानीमानिचक्षुद्रमिश्राणीवबीजानीतराणिचेतराणिचांडजानिचजारजानि
चस्वेदजानिचोद्भिज्जानिचाश्वागावःपुरुषाहस्तिनोयत्किंचेदंप्राणिजंगमंचपतत्रिचयच्चस्थावरंसर्वंतत्
प्रज्ञानेत्रंप्रज्ञानेप्रतिष्ठितंप्रज्ञानेत्रोलोकःप्रज्ञाप्रतिष्ठाप्रज्ञानंब्रह्मासएतेनप्रज्ञेनात्मनास्माल्लोकादुत्क
म्यामुष्मिन्स्वर्गेलोकेसर्वान्कामानाप्त्वामृतःसमभवत्समभवत् ॥२॥ ॥अथांत्येष्टिमंत्राः॥ परे
यिवांसंप्रवतोमहीरनुबहुभ्यःपंथामनुपस्पशानं॥ वैवस्वतंसंगमनंजनानांयमंराजानंहविषादुवस्य॥ य
मोनोगातुंप्रथमोविवेदनैषागव्यूतिरपभर्तवाउ॥यत्रानःपूर्वेपितरःपरेयुरेनाजज्ञानाःपथ्याअनुस्वाः॥

मातली कव्यैर्यमो अंगिरोभिर्बृहस्पतिर्ऋक्वभिर्वावृधानः॥ यांश्चदेवावावृधुर्येचदेवान्त्स्वाहान्येस्वधया
न्येमदंति॥ इमंयमप्रस्तरमाहिसीदांगिरोभिःपितृभिःसंविदानः॥ आत्वामंत्राःकविशस्तावहंत्वेनाराज
न्हविषामादयस्व ॥ अंगिरोभिरागहियज्ञियेभिर्यमवैरूपैरिहमादयस्व ॥ विवस्वंतंहुवेयःपितातेस्मि
न्यज्ञेबर्हिष्यानिषद्य ॥ १ ॥ अंगिरसोनःपितरोनवग्वाअथर्वाणोभृगवःसोम्यासः॥तेषांवयंसुमतौय
ज्ञियानामपिभद्रेसौमनसेस्याम ॥ प्रेहिप्रेहिपथिभिःपूर्व्येभिर्यत्रानःपूर्वेपितरःपरेयुः ॥ उभाराजा
नास्वधयामदंतायमंपश्यासिवरुणंचदेवं ॥ संगच्छस्वपितृभिःसंयमेनेष्टापूर्तेनपरमेव्योमन् ॥ हित्वा
यावद्यंपुनरस्तमेहिसंगच्छस्वतन्वासुवर्चाः ॥ अपेतवीतविचसर्पतातोस्माएतंपितरोलोकमक्रन् ॥
अहोभिरद्भिरक्तुभिर्व्यक्तंयमोददात्यवसानमस्मै ॥ अतिद्रवसारमेयौश्वानौचतुरक्षौशबलौसाधुनाप
था ॥ अथापितॄन्त्सुविदत्राँउपेहियमेनयेसधमादंमदंति ॥ २ ॥ यौतेश्वानौयमरक्षितारौचतुरक्षौप
थिरक्षीनृचक्षसौ ॥ ताभ्यामेनंपरिदेहिराजन्त्स्वस्तिचास्माअनमीवंचधेहि ॥ उरूणसावसुतृपाउदुं

बलौयमस्यंदूतौचरतोजनाँअनु ॥ तावस्मभ्यंदृशयेसूर्यायपुनर्दातामसुमद्येहभद्रं ॥ यमाय० क०
१ ॥ यमायघृतवद्धविर्जुहोतप्रचतिष्ठत ॥ सनोदेवेष्वायमद्दीर्घमायुःप्रजीवसे ॥ यमायमधुमत्तमं
राज्ञेहव्यंजुहोतन ॥ इदंनमऋषिभ्यःपूर्वजेभ्यःपूर्वेभ्यःपथिकृद्भ्यः ॥ त्रिकद्रुकेभिःपततिषळुर्वीरेक
मिद्बृहत ॥ त्रिष्टुब्गायत्रीछंदांसिसर्वातायमआहिता ॥ ३ ॥ उदीरता० वर्ग ३ ॥ मैनमग्नेविदहो
माभिशोचोमास्यत्वचंचिक्षिपोमाशरीरं ॥ यदाशृतंकृणवोजातवेदोथेमेनंप्रहिणुतात्पितृभ्यः ॥ शृ
तंयदाकरसिजातवेदोथेमेनंपरिदत्तात्पितृभ्यः ॥ यदागच्छात्यसुनीतिमेतामथादेवानांवशनीर्भवा
ति ॥ सूर्यंचक्षुर्गच्छतुवातमात्माद्यांचगच्छपृथिवींचधर्मणा ॥ अपोवागच्छयदितत्रतेहित
मोषधीषुप्रतितिष्ठाशरीरैः ॥ अजोभागस्तपसातंतपस्वतंतेशोचिस्तपतुतंतेअर्चिः ॥ यास्ते
शिवास्तन्वोजातवेदस्ताभिर्वहैनंसुकृतामुलोकं ॥ अवसृजपुनरग्नेपितृभ्योयस्तआहुतश्चरतिस्व
धाभिः ॥ आयुर्वसानउपवेतुशेषःसंगच्छतांतन्वाजातवेदः ॥ ४ ॥ यत्तेकृष्णःशकुनआतुतोदपिपीलः

सर्पंउतवाश्वापदः ॥ अग्निष्टद्विश्वादंगदंकृणोतुसोमश्चयोब्राह्मणाँआविवेश ॥ अग्नेवर्मपरिगो
भिर्व्ययस्वसंप्रोर्णुष्वपीवसामेदसाच ॥ नेत्वाधृष्णुर्हरसाजर्हृषाणोदधृग्विधक्ष्यन्पर्यंखयाते ॥
इममग्नेचमसंमाविजिह्वरःप्रियोदेवानामुतसोम्यानां ॥ एषयश्चमसोदेवपानस्तस्मिन्देवाअमृतामाद
यंते ॥ क्रव्यादमग्निंप्रहिणोमिदूरंयमराज्ञोगच्छतुरिप्रवाहः ॥ इहैवायमितरोजातवेदादेवेभ्योहव्यंव
हतुप्रजानन् ॥ योअग्निःक्रव्यात्प्रविवेशवोगृहमिमंपश्यन्नितरंजातवेदसं ॥ तंहरामिपितृयज्ञायदेवं
सघर्ममिन्वात्परमेसधस्थे ॥ ५ ॥ योअग्निःक्रव्यवाहनःपितॄन्यक्षदृतावृधः ॥ प्रेदुहव्यानिवोचतिदेवे
भ्यश्चपितृभ्यआ ॥ उशंतस्त्वा० क्र० १ ॥ यंत्वमग्नेसमदहस्तमुनिर्वापयापुनः ॥ कियाम्ब्वत्ररोह
तुपाकदूर्वाव्यल्कशा ॥ शीतिकेशीतिकावतिल्हादिकेल्हादिकावति॥ मंडूक्याइसुसंगमइमंस्वग्निं
हर्षय॥ ६ ॥ त्वष्टादुहित्रेवहतुंकृणोतीतीदंविश्वंभुवनंसमेतियमस्यमातापर्युह्यमानामहोजायाविवं
स्वतोननाश ॥ अपागूहन्नमृतांमर्त्येभ्यःकृत्वीसवर्णामददुर्विवस्वते ॥ उताश्विनावभरद्यत्तदासीदज

हाद्वुद्दामिथुनासरण्यूः ॥ पूषात्वेतश्च्यावयतुप्रविद्वानन॑ष्टपशुर्भुव॑नस्यगोपाः ॥ सत्वैतेभ्यः परिदद्त्पि
तृभ्योग्निर्देवेभ्यः सुविदत्रियेभ्यः ॥ आयुर्विश्वायुः परिपासतित्वापूषात्वापातुप्रपथेपुरस्तात् ॥ यत्रास
तेसुकृतोयत्रतेययुस्तत्रत्वादेवः सवितादधातु ॥ पूषेमाआशाअनुवेदसर्वाः सोअस्माँअभयतमेनने
षत् ॥ स्वस्तिदाआघृणिः सर्ववीरोप्रयुच्छन्पुरएतुप्रजानन् ॥ ७ ॥ प्रपथेपथामजनिष्टपूषाप्रपथेदिवः
प्रपथेपृथिव्याः ॥ उभेअभिप्रियतमेसधस्थेआचपराचचरतिप्रजानन् ॥ सरस्वतीदेवयंतोहवंतेसर
स्वतीमध्वरेतायमाने ॥ सरस्वतींसुकृतोअह्वयंतसरस्वतीदाशुषेवार्यदात् ॥ सरस्वतियासरथंययाथ
स्वधाभिर्देविपितृभिर्मदंती ॥ आसद्यास्मिन्बर्हिषिमादयस्वानमीवाइषआधेह्यस्मे ॥ सरस्वतींयां
पितरोहवंतेदक्षिणायज्ञमभिनक्षमाणाः ॥ सहस्रार्घमिळोअत्रभागंरायस्पोषंयजमानेषुधेहि ॥ आपो
अस्मान्० ऋ० १ ॥ द्रप्सश्चस्कंदप्रथमाँअनुद्यूनिमंचयोनिमनुयश्चपूर्वः ॥ समानंयोनिमनुसंचरंतंद्रप्संजु
होम्यनुसप्तहोत्राः ॥ यस्तेद्रप्सः स्कंदतियस्तेअंशुर्बाहुच्युतोधिषणायाउपस्थात् ॥ अध्वर्योर्वापरि

वायःपवित्रात्तेंजुहोमिमनसावषट्कृतं॥ यस्तेंद्रप्सःस्कन्नोयस्तेंअंशुरवश्चयःपरःस्रुचा॥ अयंदेवोबृह
स्पतिःसंतंसिंचतुराधसे॥पयस्वतीरोषधयःपयस्वन्मामकंवचः॥अपांपयस्वदित्पयस्तेनमासहशुंधत ॥
॥९॥परंमृत्योअनुपरेहिपंथांयस्तेस्वइतरोदेवयानात्॥चक्षुष्मतेशृण्वतेतेब्रवीमिमानःप्रजांरीरिषोमोत
वीरान्॥मृत्योःपदंयोपयंतोयदैतद्राघीयआयुःप्रतरंदधानाः ॥ आप्यायमानाःप्रजयाधनेनशुद्धाःपूता
भवतयज्ञियासः॥इमेजीवाविमृतैरावव्रन्नभूद्भद्रादेवहूतिर्नोअद्य॥प्रांचोअगामनृतयेहसायद्राघीय
आयुःप्रतरंदधानाः॥इमंजीवेभ्यःपरिधिंदधामिमैषांनुगादपरोअर्थमेतं॥ शतंजीवंतुशरदःपुरूचीरंतर्मृ
त्युंदधतांपर्वतेन॥यथाहान्यनुपूर्वंभवंतियथऋतवऋतुभिर्यंतिसाधु॥ यथानपूर्वमपरोजहात्येवाधातरा
यूंषिकल्पयैषां॥१०॥आरोहतायुर्जरसंवृणानाअनुपूर्वंयतमानायतिष्ठ॥इहत्वष्टासुजनिमासजोषादी
र्घमायुःकरतिजीवसेवः॥इमानारीरविधवाःसुपत्नीरांजनेनसर्पिषासंविशंतु ॥ अनश्रवोनमीवाःसुरत्ना
आरोहंतुजनयोयोनिमग्रे॥उदीर्ष्वनार्यभिजीवलोकंगतासुमेतमुपशेषएहि॥हस्तग्राभस्यदिधिषोस्तवे

दंपत्युंजनित्वमभिसंबभूथ॥धनुर्हस्तादाददानोमृतस्यास्मेक्षत्रायवर्चसेबलाय॥अत्रैवत्वमिहवयंसुवी
राविश्वाःस्पृधोअभिमातीर्जयेम ॥ उपसर्पमातरंभूमिमेतामुरुव्यचंसंपृथिवींसुशेवाँ ॥ ऊर्णम्रदायुव
तिर्दक्षिणावतएषात्वापातुनिर्ऋतेरुपस्थात् ॥ उच्छ्वंचस्वपृथिविमानिबाधथाःसूपायनास्मैभवसूपवं
चना ॥ मातापुत्रंयथासिचाभ्येनंभूमऊर्णुहि ॥ उच्छ्वंचमानापृथिवीसुतिष्ठतुसहस्रंमितउपहिश्रयं
तां ॥ तेगृहासोघृतश्चुतोभवंतुविश्वाहास्मैशरणाःसंत्वत्र ॥ उत्तेस्तभ्नामिपृथिवींत्वत्परीमंलोगंनिदध
न्मोअहंरिषं ॥ एतांस्थूणांपितरोधारयंतुतेत्रायमःसदनातेमिनोतु ॥ प्रतीचीनेमामहनीष्वाःपर्णमि
वादधुः ॥ प्रतीचींजग्रभावाचमश्वंरशनयायथा ॥१२॥ ( गर्भेनुसन्नन्वेषामवेदमहंदेवानांजनिमा
निविश्वा ॥ शतंमापुरआयसीररक्षन्नधश्येनोजवसानिरदीयं ॥१॥ अतिरिक्तंन्यूनेंजुहोमिन्यूनमति
रिक्तेजुहोमि॥समंसमेंजुहोमिस्वाहाकृताहुतिरेतुदेवान् ) सूक्तं ॥ निवर्तध्वंमानुगातास्मान्त्सिषक्तरे
वतीः ॥ अग्नीषोमापुनर्वसूअस्मेधारयतंरयिं ॥ पुनरेनानिवर्तयपुनरेनान्याकुरु ॥ इंद्रंएणानियंच्छ

त्वष्टिरेनाउपाजंतु ॥ पुनरेतानिवर्ततामस्मिन्पुष्यंतुगोपतौ ॥ इहैवाग्नेनिधारयेहतिष्ठतुयारयिः॥यन्नि
यानंन्यर्यनंसंज्ञानंयत्परायणं ॥ आवर्तनंनिवर्तनंयोगोपाऽअपितंहुवे॥ यउदानड्न्ययनंयउदानट्प
रायणं ॥ आवर्तनंनिवर्तनमपिगोपानिवर्तताम् ॥१॥ आनिवर्तनिवर्तयपुनर्नइंद्रगादेहि ॥ जीवाभि
र्भुनजामहै ॥ परिवोविश्वतोदधऊर्जाघृतेनपयसा ॥ येदेवाःकेचयज्ञियास्तेरय्यासंसृजंतुनः ॥ आ
निवर्तनवर्तयनिनिवर्तनवर्तय ॥ भूम्याश्चतस्रःप्रदिशस्ताभ्यएनानिवर्तय ॥ भद्रंनोअपिवातयमनः
॥ २ ॥ ॐशांतिःशांतिःशांतिः ॥ ॥ इतिमंत्रसंहितासमाप्ता ॥ ॥ श्रीकृष्णार्पणमस्तु ॥



हें पुस्तक

गजानन चिंतामण शास्त्री देव बुकसेलर यांनीं

मुंबईंत "गणपत कृष्णाजी" यांचे छापखान्यांत छापविलें. शके १८२६

किंमत. साध्या कागदाची प्रत १।।। रुपये. उत्तम वोढीव सफेत कागदाची प्रत २।। रुपये.

॥ इति ऋग्वेदी मंत्रसंहिता समाप्त ॥